# रामायण-संग्रहः




लेखक
वे० वरदाचार्य एम० ए०, पी-एच० डी०
अध्यक्ष, संस्कृत विभाग
श्री वेंकटेश्वर विश्वविद्यालय
तिरुपति

प्रकाशक
रामनारायणलाल बेनीप्रसाद
प्रकाशक तथा पुस्तक-विक्रेता
इलाहाबाद-२

प्रथम संस्करण ] १९६१ [ मूल्य १·५० रु०

## प्रस्तावना

प्रस्तुत पृष्ठों में आदिकवि वाल्मीकि के शब्दों में रामायण को संग्रहीत करने का प्रयास किया गया है। किसी ग्रन्थ के सार को एक हानि सहनी पड़ती है, यथा—उसमें मूल ग्रन्थ के कुछ सुन्दर अंशों का समावेश नहीं हो पाता। यह नियम रामायण महाकाव्य के सम्बन्ध में तो अपेक्षाकृत अधिक सत्य है। तो भी, संक्षेप के विषय में रक्षा करने वाला लक्षण यह है कि कहानी मौलिक लेखक के शब्दों में दी जाती है। संग्रह के परिमाण को कम करने के लिए यद्यपि कुछ अमुख्य घटनाओं को छोड़ देना आवश्यक समझा गया है तथापि यहाँ कथावृत्त के सूत्र की रक्षा करने की ओर विशेष सावधानी रखी गयी है।

रामायण के प्राचीन समालोचकों तथा संस्कृत साहित्य के इतिहासलेखकों का मत है कि वाल्मीकि ने उत्तरकाण्ड की रचना नहीं की। तो भी, यह स्पष्ट है कि यदि वाल्मीकि ने उत्तरकाण्ड की रचना की थी तो निस्सन्देह इसके द्वारा महाकाव्य के एक अंश की पूर्ति हुई थी। महाकाव्य के प्रारम्भ में यह कहा गया है कि वाल्मीकि ने छः काण्डों का प्रणयन किया था और साथ ही उत्तरकाण्ड का भी। कालिदास के अनुसार सम्पूर्ण महाकाव्य वाल्मीकि की मौलिक रचना है। रघुवंश के चौदहवें और पन्द्रहवें सर्ग में उन्होंने उत्तरकाण्ड के विषय का अनुगमन सूक्ष्म रूप से किया है। भवभूति ने उस आदि महाकवि के प्रति अपनी श्रद्धाञ्जलि समर्पित की है, क्योंकि उसके नाटक का आधार वाल्मीकिविरचित उत्तरकाण्ड है। कुन्दमाला के लेखक दिङ्नाग के अनुसार वाल्मीकि ने राम द्वारा सीता-त्याग तक ही महाकाव्य का प्रणयन किया था। महाभारत में प्राप्त उत्तरकाण्ड की घटनाओं के वर्णनों से सिद्ध होता है कि व्यास के समय में और सम्भवतः उससे भी पहले, क्योंकि इन घटनाओं का वर्णन करने वाले व्यास के पूर्ववर्ती हैं, यह समझा जाता था कि वाल्मीकि

सम्पूर्ण काव्य के लेखक हैं। विख्यात साहित्यशास्त्री आनन्दवर्धन के अनुसार राम द्वारा सीता के अन्तिम त्याग तक ही करुण रस के चितेरे वाल्मीकि ने महाकाव्य की रचना की थी। यह विश्वास करना ठीक नहीं है कि इन समस्त विद्वानों और लेखकों ने वाल्मीकि के उत्तरकाण्ड-लेखकत्व-विषयक परम्परा-प्राप्त अधिकार का अनुमान बिना सोचे समझे किया होगा। अतः इस संग्रह में उत्तरकाण्ड का समावेश किया गया है। आशा है, रामायण-संग्रह पाठकों की जिज्ञासा का उपशमन करेगा।

--लेखक

॥ श्रीः ॥

# रामायण-संग्रहः

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

## बालकाण्डम्

[ वाल्मीकिना पृष्टो नारदः रामगुणान् वर्णयति । ]

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥१॥
कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥२॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥३॥
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥४॥
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे ! त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥५॥

श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥६॥

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥७॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥८॥

बुद्धिमान्नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ।
धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ॥९॥

रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥१०॥

विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥११॥

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥१२॥

यथावत्पूजितस्तेन देवर्षिर्नारदस्तदा ।
आपृच्छ्यैवाभ्यनुज्ञातः स जगाम विहायसम् ॥१३॥

[ तमसातटेविद्धं क्रौञ्चं विलोक्य मुनिहृदये कारुण्योत्पत्तिः ]

स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्तु विदूरतः ॥१४॥

विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ।
तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् ॥१५॥
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ।
तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ॥१६॥
जघान वैरनिलयो निषादस्तस्य पश्यतः ।
तं शोणितपरीताङ्गं वेष्टमानं महीतले ॥१७॥
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ।
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् ॥१८॥
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥१९॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥२०॥
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि ।
तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥२१॥

[ ब्रह्मणः रामचरितवर्णनप्रस्तावः ]

आजगाम ततो ब्रह्मा लोककर्ता स्वयम्प्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुंगवम् ॥२२॥
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ।
तमुवाच ततो ब्रह्मा प्रहस्य मुनिपूंगवम् ॥२३॥

रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥२४॥
यच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ॥२५॥
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ॥२६॥
ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः ।
पुरा यत्तत्र निर्वृत्तं पाणावमलकं यथा ॥२७॥
प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥२८॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ।
तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम् ॥२९॥
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ।
भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥३०॥
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥३१॥
तौ राजपुत्रौ कात्स्न्र्येन धर्म्यमाख्यानमुत्तमम् ।
वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥३२॥
ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥३३॥

तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु साध्विति तावूचुः परं विस्मयमागताः ।।३४।।

× × ×

[ पुत्रलाभार्थं दशरथस्य अश्वमेधयज्ञकरण पुत्रलाभश्च ]

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ।।३५।।
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।।३६।।
पुरीमावासयामास दिवि देवपतिर्यथा ।
तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।।३७।।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ।
नाल्पसंनिचयः कश्चिदासीत्तस्मिन् पुरोत्तमे ।।३८।।
न नास्तिको नानृतको न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान् विद्यते तदा ।।३९।।
तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ।।४०।।
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः ।।४१।।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ।
चिन्तयानस्य तस्यैव बुद्धिरासीन्महात्मनः ।।४२।।

सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम् ।
ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् ॥४३॥
शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ।
ततस्सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥४४॥
समानयत्स तान् सर्वान् समस्तान् वेदपारगान् ।
तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥४५॥
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ।
मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥४६॥
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ।
ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥४७॥
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ।
ऋष्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥४८॥
श्रीमांश्च सह पत्नीभी राजा दीक्षामुपाविशत् ।
अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरंगमे ॥४९॥
सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ।
ततः प्राक्रमदिष्टिं तां पुत्रीयां पुत्रकारणात् ॥५०॥
ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥५१॥
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥५२॥

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
इदं तु नरशार्दूल पायसं देवनिर्मितम् ।।५३।।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ।
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ।।५४।।
तासु त्वं प्राप्स्यसे पुत्रान् यदर्थं यजसे नृप ।
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ।।५५।।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ।
ततस्तद्भुतप्रख्यं भूतं परमभास्वरम् ।।५६।।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ।
कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।।५७।।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ।
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।।५८।।
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।।५९।।
निवृत्ते तु क्रतौ तस्मिन् हयमेधे महात्मनः ।
समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।।६०।।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।।६१।।
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।।६२।।

प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याजनयद्रामं सर्वलक्षणसंयुतम् ॥६३॥
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥६४॥
सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ।
प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ॥६५॥
अतीत्यैकादशाहं तु नामकर्म तथाकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥६६॥
सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ।
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥६७॥
बभूव भूयो भूतानां स्वयम्भूरिव संमतः ।
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥६८॥
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ।
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः॥६९॥
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ।
न च तेन विना निद्रां लभते पुरुषोत्तमः ॥७०॥
यदा हि हयमारूढो मृगयां याति राघवः ।
तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥७१॥
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥७२॥

ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।
पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ।।७३।।

× × ×

[ विश्वामित्रकृता रामयाचना दशरथस्य स्वीकृतिश्च ]

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ।।७४।।
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ।
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ।।७५।।
तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ।
प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ।।७६।।
उवाच परमोदारो हृष्टस्तमभिपूजयन् ।
यथा सदृशदारेषु पुत्रजन्माप्रजस्य च ।।७७।।
तथैवागमनं मन्ये स्वागतं ते महामुने ।
ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।।७८।।
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ।
तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।।७९।।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ।
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।।८०।।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।।८१।।

कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे ।
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥८२॥
तत्पुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥८३॥
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥८४॥
इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो महामुनिः ॥८५॥
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ।
न रामगमने राजन् संशयं गन्तुमर्हसि ॥८६॥
तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥८७॥
तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् ।
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥८८॥
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥८९॥

[ विश्वामित्रेणसह रामलक्ष्मणयोर्गमनम् ताटकयाश्चवधः ]

विश्वामित्रो ययावग्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥९०॥

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ।।६१।।
गृहाण वत्स सलिलं मा भूत्कालस्य पर्ययः ।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।।६२।।
न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः ।
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ।।६३।।
ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ।।६४।।
ऊषुस्तां रजनीं तीरे सरय्वाः सुसुखं त्रयः ।
ततः प्रभाते विमले कृताह्निकमरिन्दमौ ।।६५।।
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ।।६६।।
स वनं घोरसंकाशं दृष्ट्वा नृपवरात्मजः ।
संकीर्णं बदरीभिश्च किं त्वेतद्दारुणं वनम् ।।६७।।
तमुवाच महातेजा विश्वामित्रो महामुनिः ।
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ।।६८।।
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ।
सेयं पन्थानमावृत्य वसत्यध्यर्धयोजने ।।६९।।
इत एव च गन्तव्यं ताटकाया वनं यतः ।
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।।१००।।

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥१०१॥
करिष्यामि न संदेहस्ताटकावधमुत्तमम् ।
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिन्दमः ॥१०२॥
ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ।
ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥१०३॥
श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दो विनिःसृतः ।
तामपतन्तीं वेगेन विक्रान्तामशनीमिव ॥१०४॥
शरेणोरसि विव्याध सा पपात ममार च ।
अथ तां रजनीमुष्य विश्वामित्रो महायशाः ॥१०५॥
प्रहस्य राघवं वाक्यमुवाच मधुराक्षरम् ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥१०६॥
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेवाथ काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥१०७॥
अस्त्राणां त्वहमिच्छामि संहारान् मुनिपुंगव ।
एवं ब्रुवति काकुत्स्थे विश्वामित्रो महामतिः ॥१०८॥
संहारान् व्याजहाराथ धृतिमान् सुव्रतः शुचिः ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥१०९॥
भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ।
रक्षितव्या क्रिया ब्रह्मन् मया वध्याश्च राक्षसाः ॥११०॥

[ सिद्धाश्रमं गत्वा विश्वामित्रयज्ञरक्षणं सुबाहुमारीचयोः वधश्च ]

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ।।१११।।
एष पूर्वाश्रमो राम वामनस्य महात्मनः ।
सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ।।११२।।
मयापि भक्त्या तस्यैष वामनस्योपयुज्यते ।
अथ गच्छामहे राम सिद्धाश्रममनुत्तमम् ।।११३।।
इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ।
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ।।११४।।
प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ।
अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।।११५।।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ।
अथ काले गते तस्मिन् षष्ठेऽहनि समागते ।।११६।।
आकाशे च महान्शब्दः प्रादुरासीद्भयानकः ।
मारीचश्च सुबाहुश्च तयोरनुचरास्तथा ।।११७।।
आगम्य भीमसंकाशा रुधिरौघानवासृजन् ।
मानवं परमोदारमस्त्रं परमभास्वरम् ।।११८।।
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ।
स तेन परमास्त्रेण मानवेन समाहितः ।।११९।।
संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ।
संगृह्य सुमहच्चापमाग्नेयं रघुनन्दनः ।।१२०।।

सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ।
शेषान् वायव्यमादाय निजघान महायशाः ॥१२१॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥१२२॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।

× × ×

[ विश्वामित्रेणसह रामलक्ष्मणयोर्जनकपुरगमनम् ]

प्रभातायां तु शर्वर्यां कृत पौर्वाह्णिकक्रियौ ॥१२३॥
विश्वामित्रमृषींश्चान्यान् सहितावभिजग्मतुः ।
ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥१२४॥
आज्ञापय यथेष्टं वै शासनं करवाव किम् ।
एवमुक्तास्ततस्ताभ्यां सर्व एव महर्षयः ॥१२५॥
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ।
मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ॥१२६॥
यज्ञः परमधर्मिष्टस्तस्य यास्यामहे वयम् ।
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ॥१२७॥
अद्भुतं च धनूरत्नं तत्रैकं द्रष्टुमर्हसि ।
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ॥१२८॥

सर्षिसङ्घः सकाकुत्स्थ आमन्त्र्य वनदेवताः ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥१२९॥
ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥१३०॥
विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।
प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥१३१॥

[ रामेण धनुर्भङ्गः ]

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥१३२॥
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ।
प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥१३३॥
पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥१३४॥
एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥१३५॥
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥१३६॥
ततः स राजा जनकः सचिवान् व्यादिदेश ह ।
धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥१३७॥

जनकेन समादिष्टाः सचिवाः प्राविशन् पुरीम् ।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥१३८॥
विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥१३९॥
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ।
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥१४०॥
तद्बभंज धनुर्मध्ये नरश्रेष्ठो महायशाः ।
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ॥१४१॥

[ जनकस्य दूतसम्प्रेषणं दशरथस्य मिथिलां प्रत्यागमनम् ]

प्रत्याश्वस्ते जने तस्मिन् राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥१४२॥
भगवन् दृष्टवीर्यो मे रामो दशरथात्मजः ।
भवतोऽनुमते ब्रह्मन् शीघ्रं गच्छन्तु मन्त्रिणः ॥१४३॥
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥१४४॥
प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ।
कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः ॥१४५॥
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ।
जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ॥१४६॥

त्रिरात्रमुषिता मार्गे त्वयोध्यां प्राविशन् पुरीम् ।
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ॥१४७॥
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् ।
दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ॥१४८॥
संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥१४९॥
चतुरंगबलं सर्वं शीघ्रं निर्यातु सर्वशः ।
वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी ॥१५०॥
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ।
गत्वा तु चतुरहं मार्गं विदेहानभ्युपेयिवान् ॥१५१॥
राजा तु जनकः श्रीमान् श्रुत्वा पूजामकल्पयत् ।
अथ रामो महातेजा लक्ष्मणेन समं ययौ ॥१५२॥
विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ।
राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ॥१५३॥
सबन्धुरगमत्तत्र जनको यत्र वर्तते ।
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥१५४॥

[ राजकुमाराणामुद्वाहः ]

वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ।
तूष्णीम्भूते दशरथे वसिष्ठो भगवानृषिः ॥१५५॥

उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ।
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ॥१५६॥
रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ॥१५७॥
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ।
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च ॥१५८॥
तमुक्तवन्तं वैदेहं विश्वामित्रो महानृषिः ।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥१५९॥
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ।
भ्रातायवीयान् धर्मज्ञ एष राजा कुशध्वजः ॥१६०॥
अस्य धर्मात्मनो राजन् रूपेणाप्रतिमं भुवि ।
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥१६१॥
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ॥१६२॥
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ।
एकाह्ना राजपुत्रीणां चतसृणां महामुने ॥१६३॥
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ।
अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥१६४॥
जुहावग्नौ महातेजा वसिष्ठो भगवानृषिः ।
ततः सीतां समानीय सर्वाभरणभूषिताम् ॥१६५॥

अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ।
इयं सीता मम सुता सहधर्मचरी तव ।।१६६।।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ।।१६७।।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ।।१६८।।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ।
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।।१६९।।
पाणिं गृहाण माण्डव्याः पाणिना रघुनन्दन ।
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ।।१७०।।
श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ।
जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन् ।।१७१।।
चत्वारस्ते चतसृणां वसिष्टस्य मते स्थिताः ।
अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेव च ।।१७२।।
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ।
अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।।१७३।।
राजाप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ।
अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।।१७४।।
आपृच्छ्य तौ च राजानौ जगामोत्तरपर्वतम् ।
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ।।१७५।।

ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुगः ।
प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् १७६॥
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ।
भरतं केकयीपुत्रमब्रवीद्रघुनन्दनः ॥१७७॥
त्वां नेतुमागतो वीर युधाजिन्मातुलस्तव ।
श्रुत्वा दशरथस्यैतद्भरतः केकयीसुतः ॥१७८॥
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ।
मातॄश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ॥१७९॥
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ।
चकार रामो धर्मात्मा प्रियाणि च हितानि च ॥१८०॥

---

# अयोध्याकाण्डम्

[ रामस्य यौवराज्यभिषेकप्रस्तावः ]

अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ।।१।।

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ।।२।।

इदं शरीरं लोकस्य कृत्स्नस्य चरता हितम् ।
पाण्डरस्यातपत्रस्य छायायां जरितं मया ।।३।।

सोऽहं विश्राममिच्छामि रामं कृत्वा प्रजाहिते ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ।।४।।

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् नृपा नृपम् ।
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ।।५।।

अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदद्य भगवान् सर्वमाज्ञापयितुमर्हति।।६।।

तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन्।।७।।

ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ।
रामः कृतात्मा भवता शीघ्रमानीयतामिति ।।८।।

स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्रानयांचक्रे रथेन रथिनां वरम् ।।९।।
स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्रमिव काश्यपः ।।१०।।
यतस्त्वया प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ।।११।।
अथाभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ।।१२।।

[ मन्थरया प्रबोधितायाः कैकेय्याः वरद्वययाचनम् ]

ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ।।१३।।
ज्ञातिदासी यतो जाता कैकेय्यास्तु सहोषिता ।
प्रासादं चन्द्रसंकाशमारुरोह यदृच्छया ।।१४।।
प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ।।१५।।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ।
अतिमात्रप्रहर्षोऽयं किं जनस्य च शंस मे ।।१६।।
विदीर्यमाणा हर्षेण धात्री परमया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम् ।।१७।।

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता ।
कैलासशिखराकारात् प्रासादादवरोहत ।।१८।।
शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ।।१९।।
अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ।
रामस्तु भरते पापं कुर्यादिति न संशयः ।।२०।।
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राममाता सपत्नी ते कथं वैरं न यातयेत् ।।२१।।
तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ।
यौ तौ दैवासुरे युद्धे वरौ दशरथो ददौ ।।२२।।
तौ स्मारय महाभाग सोऽर्थो मा त्वामतिक्रमेत् ।
व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ।।२३।।
रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च ।
भरतः क्रियतां राजा पृथिव्याः पार्थिवर्षभः ।।२४।।
विदर्शिता यदा देवी कुब्जया पापया भृशम् ।
मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् ।।२५।।
अथ सामर्षिता देवी सम्यक् कृत्वा विनिश्चयम् ।
क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ।।२६।।
आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ।
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ।।२७।।

तत्र तां पतितां भूमौ शयानामतथोचिताम् ।
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः ॥२८॥
कामी कमलपत्राक्षीमुवाच वनितामिदम् ।
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ॥२९॥
देवि केनाभियुक्तासि केन वासि विमानिता ।
तत्त्वं मे ब्रूहि कैकेयि यतस्ते भयमागतम् ॥३०॥
तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ।
तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ॥३१॥
उवाच पृथिवीपालं कैकयी दारुणं वचः ।
नास्मि विप्रकृता देव केनचिन्नावमानिता ॥३२॥
अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ।
स्मर राजन् पुरा वृत्तं तस्मिन् दैवासुरे रणे ॥३३॥
वरौ यौ मे त्वया देव तदा दत्तौ महीपते ।
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ॥३४॥
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो भवतु तापसः ॥३५॥
भरतो भजतामद्य यौवराज्यमकण्टकम् ।
ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ॥३६॥

[ रामाय वनवासयाचनं श्रुत्वा दशरथस्य शोकः ]

चिन्तामभिसमापेदे मुहूर्तं प्रतताप ह ।
मोहमापेदिवान् भूयः शोकोपहतचेतनः ।।३७।।

ततः प्रभातां रजनीमुदिते च दिवाकरे ।
वसिष्ठः परमप्रीतः परमर्षिभिरावृतः ।।३८।।

स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
तमुवाच महातेजाः सूतपुत्रं विशारदम् ।।३९।।

त्वरयस्व महाराज यथा समुदितेऽहनि ।
पुण्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ।।४०।।

इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः ।
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ।।४१।।

यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ।।४२।।

प्रजागरपरिश्रान्तो निद्राया वशमेयिवान् ।
राममानय भद्रं ते नात्र कार्या विचारणा ।।४३।।

निर्जगाम महाबाहो राघवस्य दिदृक्षया ।
सागरह्लदसंकाशात्सुमन्त्रोऽन्तःपुराच्छुभात् ।।४४।।

मेरुश्रृंगसमं सूतो रामवेश्म ददर्श ह ।
प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने ।।४५।।

राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ।
कौसल्यासुप्रजा राम पिता त्वां द्रष्टुमिच्छति ।।४६।।

[ रामस्यागमनं कैकेय्या सह संलापश्च ]

निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ।
राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ।।४७।।

स ददर्शासने रामो निषण्णं पितरं शुभे ।
स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।।४८।।

ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ।
रामेत्युक्त्वा च वचनं बाष्पपर्याकुलेक्षणः ।।४९।।

शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ।।५०।।

कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ।
कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता ।।५१।।

कुपितस्तन्ममाचक्ष्व त्वं चैवैनं प्रसादय ।
एवमुक्ता तु कैकेयी राघवेण महात्मना ।।५२।।

उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ।
न राजा कुपितो राम व्यसनं नास्य किंचन ।।५३।।

किंचिन्मनोगतं त्वस्य त्वद्भयान्नाभिभाषते ।
पुरा दैवासुरे युद्धे पित्रा ते मम राघव ।।५४।।

रक्षितेन वरौ दत्तौ सशल्येन महारणे ।
तत्र मे याचितो राजा भरतस्याभिषेचनम् ।।५५।।
गमनं दण्डकारण्ये तव चाद्यैव राघव ।
संनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ।।५६।।
त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ।
भरतस्त्वभिषिच्येत यदेतदभिषेचनम् ।।५७।।

[ कैकेय्या आदेशं लब्ध्वा रामस्य वनगमननिश्चयः ]

त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ।
तदप्रियमित्रघ्नो वचनं मरणोपमम् ।।५८।।
श्रुत्वा न विव्यथे रामः कैकेयी चेदमब्रवीत् ।
एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ।।५९।।
न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ।।६०।।
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तथा ।
कैकेय्याश्चप्यनार्याया निष्पपात महाद्युतिः ।।६१।।
प्रविवेशात्मवान् वेश्म मातुरप्रियशंसिवान् ।
तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने ।।६२।।
चकार माता रामस्य मंगलानि मनस्विनी ।
प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् ।।६३।।

अथ सीता समुत्पत्य वेपमाना च तं पतिम् ।
अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ।।६४।।
आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ।।६५।।
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।।६६।।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ।
सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी ।।६७।।

[ सीतालक्ष्मणयोः रामेण सह वनगमनाग्रहः रामस्य च स्वीकृतिः ]

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ।।६८।।
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ।।६९।।
वनवासस्य शूरस्य चर्या हि मम रोचते ।
तपो वा यदि वारण्यं स्वर्गो वा स्यात्त्वया सह ।।७०।।
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
उवाच वचनं रामः परिविश्वासयंस्तदा ।।७१।।
अनुगच्छस्व मां भीरु सहधर्मचरी भव ।
एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः ।।७२।।
सीतामुवाचातियशा राघवं च महाव्रतम् ।
अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ।।७३।।

ऐश्वर्यं वापि लोकानां कामये न त्वया विना ।
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ॥७४॥

व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥७५॥

[ पितरं प्रणम्य सीतया लक्ष्मणेन च सह रामस्य प्रस्थानं रथमारुह्य गंगातटं यावद् गमनम् ]

सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः ।
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्च्छितः ॥७६॥

तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्धं रुदन्तः समवेशयन् ॥७७॥

अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥७८॥

आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः ।
लक्ष्मणं चानुजानीहि सीता चान्वेति मां वनम् ॥७९॥

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥८०॥

ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
रथमारोह भद्रं ते राजपुत्र महायशः ॥८१॥

क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसि ।

× × ×

तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा ॥८२॥
आरुरोह वरारोहा कृत्वालंकारमात्मनः ।
तमारुरुहुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥८३॥
सीतातृतीयानारूढान् दृष्ट्वा धृष्टमचोदयत् ।
सुमन्त्रः संमतानश्वान् वायुवेगसमाञ्जवे ॥८४॥
रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ।
तत्र त्रिपथगां दिव्यां शिवतोयामशैवलाम् ॥८५॥
ददर्श राघवो गङ्गां पुण्यामृषिनिषेविताम् ।
सुमन्त्रमब्रवीत्सूतमिहैवाद्य वसामहे ॥८६॥

[ रथेन सह सुमन्त्रस्य निवर्तनं गङ्गामुत्तीर्य रामस्य चित्रकूटासादनम् ]

रथादवातरत्तस्तस्मात्सभार्यः सहलक्ष्मणः ।
तत्र राजा गुहो नाम रामस्यात्मसमः सखा ॥८७॥
स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥८८॥
सह सौमित्रिणा रामः समागच्छद्गुहेन सः ।
प्रभातायां तु शर्वर्यां गुहो राघवमब्रवीत् ॥८९॥
तवामरसुतप्रख्य तर्तुं सागरगां नदीम् ।
नौरियं पुरुषव्याघ्र तां त्वमारोह सुव्रत ॥९०॥

ततः कलापान् संनह्य खड्गौ बद्ध्वा च धन्विनौ ।
जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥६१॥

ततोऽब्रवीद्दाशरथिः सुमन्त्रं
स्पृशन् करेणोत्तमदक्षिणेन ।
सुमन्त्र शीघ्रं पुनरेव याहि
राज्ञः सकाशे भव चाप्रमत्तः ॥६२॥

तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥६३॥

ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥६४॥

ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः ।
कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥६५॥

तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् ।
आजहार ततश्चक्रे पर्णशालामरिंदमः ॥६६॥

× × ×

तौ तर्पयित्वा भूतानि राघवौ सह सीतया ।
तदा विविशितुः शालां सुशुभां शुभलक्षणौ ॥६७॥

[ दशरथस्य मरण मातुलगृहादे भरतस्यागमनम् ]

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥६८॥

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।
अथ राजा दशरथश्चिन्तामभ्यवपद्यत ॥९९॥
कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ।
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ॥१००॥
कौसल्ये चित्तमोहेन हृदयं सीदतीव मे ।
हा राघव महाबाहो हा ममायासनाशन ॥१०१॥
हा पितृप्रिय मे नाथ हाद्य क्वासि गतः सुत ।
हा कौसल्ये विनश्यामि हा सुमित्र तपस्विनि॥१०२॥
इति रामस्य मातुश्च सुमित्रायाश्च संनिधौ ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥१०३॥
व्यग्रनित्युः सुदुःखार्ता कौसल्यां व्यावहारिकाः ।
तैलद्रोण्यामथामात्याः संवेश्य जगतीपतिम् ॥१०४॥
राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ।
व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः ॥१०५॥
केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान् ।
वसिष्ठेनाभ्यनुज्ञाता दूताः संत्वरिता ययुः ॥१०६॥
प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम् ।
राज्ञः पादौ गृहीत्वा तु तमूचुर्भरतं वचः ॥१०७॥
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ।
स मातामहमापृच्छ्य मातुलं च युधाजितम् ॥१०८॥

रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ।
भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ।।१०९।।
अपश्यंस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ।।११०।।
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् ।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ।।१११।।
भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ।
आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ।।११२।।
अम्बाया कुशली तातो युधाजिन्मातुलश्च मे ।
यदहं प्रष्टुमिच्छामि तदम्बा वक्तुमर्हति ।।११३।।
राजा भवति भूयिष्ठमिहाम्बाया निवेशने ।
तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ।।११४।।

[ पितृमरणं भ्रातृविवासनं च श्रुत्वा भरतस्यानुतापः रामस्य प्रत्यावर्तनाय चित्रकूटगमनञ्च ]

तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् ।
मया तु पुत्र श्रुत्वैवं रामस्यैवाभिषेचनम् ।।११५।।
याचितस्ते पिता राज्यं रामस्य च विवासनम् ।
स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ।।११६।।
रामश्च सहसौमित्रिः प्रेषितः सह सीतया ।
तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ।।११७।।

पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ।
त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् ॥११८॥
श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥११९॥
न तु कामं करिष्यामि तवाहं पापनिश्चये ।
निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥१२०॥
तमेवं शोकसंतप्तं भरतं कैकयीसुतम् ।
उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ॥१२१॥
अलं शोकेन भद्रं ते राजपुत्र महायशः ।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥१२२॥
वसिष्ठस्य वचः श्रुत्वा भरतो धरणीं गतः ।
प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥१२३॥
ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः शीघ्रं रामदर्शनकाङ्क्षया ॥१२४॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोधसः ।
स गत्वा दूरमध्वानं सुपरिश्रान्तवाहनः ॥१२५॥
उवाच भरतः श्रीमान् वसिष्ठं मन्त्रिणांवरम् ।
अयं गिरिश्चित्रकूट इयं मन्दाकिनी नदी ॥१२६॥
एतत्प्रकाशते दूरान्नीलमेघनिभं वनम् ।
भरतेनाथ संदिष्टा संमर्दो न भवेदिति ॥१२७॥

[ पर्णशालायां रामभरतसमागमः ]

समन्तात्तस्य शैलस्य सेना वासमकल्पयत् ।
पद्भ्यामेव महाबाहुः प्रविवेश महद्वनम् ॥१२८॥

ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ।
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ॥१२९॥

उटजे राममासीनं जटामण्डलधारिणम् ।
धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥१३०॥

इत्येवं विलपन् दीनं प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥१३१॥

शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः ॥१३२॥

अंके भरतमारोप्य पर्यपृच्छत्समाहितः ।
कच्चिन्नु धरते तातः राजा यत्त्वमिहागतः ॥१३३॥

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ॥१३४॥

दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ।
तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् ॥१३५॥

राघवो भरतेनोक्तां बभूव गतचेतनः ।
पितुश्चकार तेजस्वी निवापं भ्रातृभिः सह ॥१३६॥

तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम् ।
लक्ष्मणेन सहभ्रात्रा प्रष्टुं समुपचक्रमे ॥१३७॥
यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥१३८॥

[ राज्यं पुनर्ग्रहीतुं रामं प्रति भरतस्य निवेदनम् ]

इत्युक्तः केकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥१३९॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे निरये जननी मम ॥१४०॥
तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥१४१॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह ॥
अथैतत्पृष्टतः कृत्वा वनमेव भवानितः ॥१४२॥
गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥१४३॥
विक्रीतमाहितं क्रीतं यत्पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥१४४॥
उपधिर्न मया कार्यो वनवासे जुगुप्सितः ।
ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः ॥१४५॥

भरतं राजशार्दूलमित्यूचुः संगता वचः ।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ।।१४६।।

[ रामस्य पादुकाभ्यां सह भरतस्य निवर्तनं तयोः प्रतिनिधिर्भूत्वा नन्दिग्रामे राज्यकार्यसञ्चालनञ्च ]

त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ।।१४७।।
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ।।१४८।।
सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ।।१४९।।
स पादुके संप्रणम्य रामं वचनमब्रवीत् ।
फलमूलाशनो वीर भवेयं रघुनन्दन ।।१५०।।
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः ।
चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम ।।१५१।।
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ।
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ।।१५२।।
शत्रुघ्नं च परिष्वज्य भरतं चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ।।१५३।।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ।
ततः शिरसि कृत्वा तु पादुक भरतस्तदा ।।१५४।।

आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ।
अयोध्यां भरतः क्षिप्रं प्रविवश महायशाः ।।१५५।।
ततो निक्षिप्य मातृः स अयोध्यायां दृढव्रतः ।
आरुरोह रथं श्रीमान्शत्रुघ्नेन समन्वितः ।।१५६।।
अग्रतो गुरवस्तत्र वसिष्टप्रमुखा द्विजाः ।
प्रययुः प्राङमुखाः सर्वे नन्दिग्रामो यतोऽभवत्।।१५७।।
ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः ।
पादुके त्वाभिषिच्याथ नन्द्रिग्रामेऽवसत्तदा ।।१५८।।
ततस्तु भरतः श्रीमानभिषिच्यार्यपादुके ।
तदधीनस्तदा राज्यं कारयामास सर्वदा ।।१५९।।
राघवस्त्वथ यातेषु तपस्विषु विचिन्तयन् ।
न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ।।१६०।।
तस्मादन्यत्र गच्छाम इति संचिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः ।।१६१।।

———

## अरण्यकाण्डम्

[ चित्रकूटादागत्य रामस्य पञ्चवट्यां निवासः, शूर्पणखायाश्च कर्णनासिकायोश्च्छेदः ]

तौ पश्यमानौ विविधाञ्शैलप्रस्थान् वनानि च ।
नदीश्च विविधा रम्या जग्मतुः सीतया सह ॥१॥

ततोऽब्रवीत्समीपस्थं रामो राजीवलोचनः ।
पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥२॥

आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः ।
अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा ॥३॥

प्रविवेश ततो रामः सीतया सहलक्ष्मणः ।
प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् ॥४॥

अब्रवीद्वचनं वीरो लक्ष्मणं लक्ष्मिवर्धनम् ।
एष लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः ॥५॥

जग्राह परमप्रीतस्तस्य पादौ परन्तपः ।
प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुंगवः ॥६॥

उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ।
पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः ॥७॥

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ।
पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ॥८॥

इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥९॥
जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ।
दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥१०॥
इतो द्वियोजने तात बहुमूलफलोदकः ।
देशो बहुमृगः श्रीमान् पञ्चवट्यभिश्रुतः॥११॥
तत्र गत्वा श्रमपदं कृत्वा सौमित्रिणा सह ।
रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥१२॥
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ।
तदाश्रमात्पञ्चवटीं जग्मतुः सह सीतया ॥१३॥
उवास सुखितस्तत्र पूज्यमानो महर्षिभिः ।
लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥१४॥
तं देशं राक्षसी काचिदाजगाम यदृच्छया ।
सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ॥१५॥
सा रामं पर्णशालायामुपविष्टं परन्तपम् ।
सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥१६॥
एनां विरूपामसतीं करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य मां न त्वं बहुमन्यसे ॥१७॥
अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥१८॥

इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ।
अभ्यधावत्सुसंक्रुद्धा महोल्का रोहिणीमिव ।।१९।।
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ।।२०।।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ।
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः ।।२१।।
उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ।
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ।।२२।।

[ विरूपितां स्वभगिनीं दृष्ट्वा खरस्य रामोपरि आक्रमणं रामेण तस्य वधश्च ]

ततस्तु सा राक्षससङ्घसंवृतं
खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रदर्शनं
पपात भूमौ गगनाद्यथा शनिः ।।२३।।

भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसीम् ।
इमामवस्थां नीता त्वं केनान्तकसमा गता ।।२४।।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ।।२५।।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ।
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् ।।२६।।

इमामवस्थां नीताहं यथानाथासती तथा ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ।।२७।।

अहं रामं सह भ्रात्रा नयामि यमसादनम् ।
सदश्वयुक्तं सोऽमर्षादारुरोह खरो रथम् ।।२८।।

ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम् ।
निर्जगाम जनस्थानान्महानादं महाजवम् ।।२९।।

स खरस्याज्ञया सूतस्तुरगान् समचोदयत् ।
यत्र रामो महाबाहुरेको धून्वन् स्थितो धनुः ।।३०।।

अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ।
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।।३१।।

खरदूषणमुख्यानां निहतानि महाहवे ।
ततः शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश ।।३२।।

हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ।
जगाम परमोद्विग्ना लंकां रावणपालिताम् ।।३३।।

× × ×

[ शूर्पणखामुखाद् सीतासौन्दर्यं श्रुत्वा रावणस्य तद्धरणप्रयासः ]

ततः शूर्पणखा दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ।।३४।।

समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ।
चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् ।।३५।।

हतान्येकेन रामेण खरश्च सहदूषणः ।
कंदर्पसमरूपश्च रामो दशरथात्मजः ॥३६॥
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः ।
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥३७॥
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
सीतानाम वरारोहा वैदेही तनुमध्यमा ॥३८॥
नैवंरूपा मया नारी दृष्टपूर्वा महीतले ।
भार्यार्थे च तवानेतुमुद्यताहं वराननाम् ३९॥
विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज ।
यदि तस्यामभिप्रायो भार्यार्थे तव जायते ॥४०॥
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ।
ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ॥४१॥
इतिकर्तव्यमित्येव कृत्वा निश्चयमात्मनः ।
स्थिरबुद्धिस्ततो रम्यां यानशालामुपागमत् ॥४२॥
काञ्चनं रथमास्थाय कामगं रत्नभूषितम् ।
राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिम् ॥४३॥
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ।
ददर्शाश्रममेकान्ते रम्ये पुण्ये वनान्तरे ॥४४॥
ददर्श नियताहारं मारीचं नाम राक्षसम् ।
रावणस्तं समागम्य विधिवत्तेन रक्षसा ॥४५॥

मारीचेनार्चितो राजा सर्वकामैरमानुषैः ।
तं तु पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ।४६।।
चतुर्दश सहस्राणि रक्षसामुग्रतेजसाम् ।
निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना ।।४७।।
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
तस्य भार्यां जनस्थानात्सीतां सुरसुतोपमाम ।।४८।।
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ।
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।।४९।।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ।
त्वां तु मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ।।५०।।
आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ।
अपक्रान्ते तु काकुत्स्थे दूरं गत्वाप्युदाहर ।।५१।।
हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ।
तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः ।।५२।।
अनुगच्छति संभ्रान्तः सौमित्रिरपि सौहृदात् ।
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् ।।५३।।
आहरिष्यामि वैदेहीं सहस्राक्षः शचीमिव ।
स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा ।।५४।।
मृगो भूत्वाश्रमद्वारि रामस्य विचचार ह ।
मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः ।।५५।।

तस्मिन्नेव ततः काले वैदेही शुभलोचना ।
कुसुमापचयव्यग्रा पादपानभ्यवर्तत ।।५६।।

[ सुवर्णमृगं दृष्ट्वा तस्यानयनाय सीताया निवेदनं रामस्य च तदर्थं गमनम् ]

अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम् ।
भर्तारमभिचक्रन्द लक्ष्मणं चापि सायुधम् ।।५७।।
उवाच सीता संहृष्टा छद्मना हृतचेतना ।
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।।५८।।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ।
एवं सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतम् ।।५९।।
बभूव राघवस्यापि मनो विस्मयमागतम् ।
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ।।६०।।
इह त्वं भव संनद्धो यन्त्रितो रक्ष मैथिलीम् ।
अहमेनं वधिष्यामि ग्रहीष्यास्यपि वा मृगम् ।।६१।।
तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ।
ततस्त्र्यवनतं चापमादायात्मविभूषणम् ।।६२।।
आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ।
अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने ।।६३।।
मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते ।
दर्शनादर्शनादेवं सोऽपाकर्षत राघवम् ।६४।।

सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः ।
पुनरेव ततो दूराद्वृक्षषण्डाद्विनिःसृतम् ॥६५॥

दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ।
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥६६॥

स भृशं मृगरूपस्य विनिर्भिद्य शरोत्तमः ।
मारीचस्यैव हृदयं बिभेदाशनिसंनिभः ॥६७॥

[ म्रियमाणस्य मारीचस्य लक्ष्मणेति वचः श्रुत्वा सीतया परुषवचनैः लक्ष्मणस्य प्रेषणम् ]

म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम्।
स प्राप्तकालमाज्ञाय। चकार च ततः स्वरम् ॥६८॥

सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ।
राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वरम् ॥६९॥

निहत्य पृषतं चान्यं मांसमादाय राघवः ।
त्वरमाणो जनस्थानं ससाराभिमुखस्तदा ॥७०॥

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥७१॥

आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि ।
न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥७२॥

तमुवाच ततस्तत्र कुपिता जनकात्मजा ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपत्स्यसे ॥७३॥

इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ।
अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ॥७४॥
अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः ।
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ॥७५॥
न च तस्य स्वरो व्यक्तं मायया केनचित्कृतः ।
लक्ष्मणेनैवमुक्ता सा क्रुद्धा संरक्तलोचना ॥७६॥
अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ।
अनार्याकरुणारम्भ नृशंस कुलपांसन ॥७७॥
रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ।
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि ॥७८॥
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ।
समक्षं तव सौमित्रे प्राणांस्त्यक्ष्ये न संशयः ॥७९॥
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ।
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिर्विजितेन्द्रियः ॥८०॥
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे ॥८१॥
गमिष्ये यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ।
स विकाङ्क्षन् भृशं रामं प्रतस्थे न चिरादिव ॥८२॥

[ लक्ष्मणे गते रावणस्यागमनं सीतापहरणञ्च ]

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ।
अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥८३॥

अभ्यगच्छत वैदेहीं हृष्टचेता निशाचरः ।
अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥८४॥
कासि कस्य कुतश्च त्वं किं निमित्तं च दण्डकान् ।
एका चरसि कल्याणि घोरान् राक्षससेवितान् ॥८५
इति प्रशस्ता वैदेही रावणेन दुरात्मना ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥८६॥
ब्राह्मणश्चातिथिश्चायमनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥८७॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते रामस्य महिषी प्रिया॥८८॥
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः ॥८९॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥९०॥
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ।
अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥९१॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥९२॥
लंका नाम समुद्रस्य मध्ये मम महापुरी ।
तत्र सीते मया सार्धं वनेषु विहरिष्यसि ॥९३॥

रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ।।९४।।
त्वं पुनर्जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् ।
पादपान् काञ्चनान्नूनं बहून् पश्यसि मन्दभाक् ।।९५
राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ।
सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।।९६।।
हस्ते हस्तं समाहत्य चकार सुमहद्वपुः ।
वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।।९७।।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ।
अङ्केनादाय वैदेहीं रथमारोपयत्तदा ।।९८।।
विचेष्टमानामादाय उत्पपाताथ रावणः ।
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।।९९।।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ।
ह्रियमाणामधर्मेण मां राघव न पश्यसि ।।१००।।
दैवतानि च यान्यस्मिन् वने विविधपादपे ।
नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ।।१०१।।
तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे ।
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् ।।१०२।।
गृध्रराजः समुत्पत्य समभिद्रुत्य रावणम् ।
तं गृहीत्वा नखैस्तीक्ष्णैर्विददार समन्ततः ।।१०३।।

ततो मुहूर्तं संग्रामो बभूवातुलवीर्ययोः ।
तस्य व्यायच्छ्यमानस्य रामस्यार्थे स रावणः ॥१०४

पक्षौ पार्श्वौ च पादौ च खड्गमुद्धृत्य सोऽछिनत् ।
निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥१०५॥

स तु सीतां विचेष्टन्तीमङ्केनादाय रावणः ।
प्रविवेश पुरीं लंकां रूपिणीं मृत्युमात्मनः ॥१०६॥

अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ।
अशोकवनिकामध्ये मैथिली नीयतामियम् ॥१०७॥

तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ।
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ॥१०८॥

अशोकवनिकां जग्मुर्मैथिलीं प्रतिगृह्य तु ।
निहत्य रामो मारीचं तूर्णं पथि निवर्तते ॥१०९॥

[ मारीचं हत्वा रामस्य विवर्तनं, सीतारामप्राप्य तदन्वेषणं विलपनञ्च ]

ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ।
संजगर्हेऽथ तं भ्राता दृष्ट्वा लक्ष्मणमागतम् ॥११०॥

त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥१११॥

यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् ।
वृक्षाद्वृक्षं प्रधावन् स गिरेश्चाद्रिं नदान्नदीम् ॥११२॥

बकुलानथ पुंनागान् चम्पकान् केतकीस्तथा ।
पृच्छन् रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ।।११३।।
ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ।
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ।।११४।।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ।
यामोषधिमिवायुष्मन्नन्वेष्यसि महावने।।११५।।
सा देवी मम च प्राणा रावणेनोभयं हृतम् ।
परिश्रान्तस्य मे तात पक्षौ छित्त्वा स राक्षसः ।।११६।।
सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम्।
उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव ।।११७।।
इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः ।
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ।।११८।।
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ।
गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् ।।११९।।
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ।।१२०।।
ततः परं जनस्थानात् त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ।।१२१।।
आजगाम ततः पम्पां लक्ष्मणेन सह प्रभुः ।

------

## किष्किन्धाकाण्ड

[ मैत्रीकरणाय सुग्रीवस्य संदेशमादाय हनूमतः आगमनं, रामलक्ष्मणयो-
स्तेन सह गमनञ्च ]

तावृश्यमूकस्य समीपचारी
चरन् ददर्शाद्भुतदर्शनीयौ ।
शाखामृगाणामधिपस्तरस्वी
वितत्रसे नैव विचेष्ट किंचित् ।।१।।

ततस्तं भयसंविग्नं वालिकिल्विषशंकितम् ।
उवाच हनुमान् वाक्यं सुग्रीवं वाक्यकोविदः ।।२।।
मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ।
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ।।३।।
ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ।
शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवंगम ।।४।।
वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः ।
पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ ।।५।।
कपिरूपं परित्यज्य हनुमान् मारुतात्मजः ।
भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ।।६।।
आबभाषेऽथ तौ वीरौ यथावत्प्रशशंस च ।
राजर्षिदेवप्रतिमौ तापसौ शंसितव्रतौ ।।७।।

देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ।
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ॥८॥
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ।
प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ॥९॥
राज्ञा वानरमुख्यानां हनूमान्नाम वानरः ।
युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति ॥१०॥
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ।
भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकाम्यया ॥११॥
एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् ।
अभिभाषस्व सौमित्रे सुग्रीवसचिवं कपिम् ॥१२॥
एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् ।
अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥१३॥
यथा ब्रवीषि हनुमन् सुग्रीववचनादिह ।
तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥१४॥
ततः स तु महाप्राज्ञो हनुमान् मारुतात्मजः ।
जगामादाय तौ वीरौ हरिराजाय राघवौ ॥१५॥
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः ।
ऋश्यमूकात्तु हनुमान् गत्वा तं मलयं गिरिम् ॥१६॥
आचचक्षे तदा वीरौ कपिराजाय राघवौ ।

[ सुग्रीवेण सह रामलक्ष्मणयोः मैत्री रामेण बालिवधश्च ]

स कृत्वा मानुषं रूपं सुग्रीवः प्लवगर्षभः ॥१७॥

दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ।
यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ।।१८।।
रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ।।१९।।
एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
स प्रहृष्टमना हस्तं पीडयामास पाणिना ।।२०।।
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा ।
प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ।।२१।।
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।
वालिनो मे महाभाग भयार्तस्याभयं कुरु ।।२२।।
प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ।
उपकारफलं मित्रं विदितं मे महाकपे ।।२३।।
वालिनं तं वधिष्यामि तव भार्यापहारिणम् ।
पुनरेवाब्रवीत्प्रीतः सुग्रीवो रघुनन्दनम् ।।२४।।
त्यज शोकं महाबाहो तां कान्तामानयामि ते ।
ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् ।।२५।।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ।
अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः ।।२६।।
गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ।
सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् ।।२७।।

वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ।।२८।।
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ।
अथ तस्य निनदं तं सुग्रीवस्य महात्मनः ।।२९।।
शुश्रावन्तः पुरगतो वाली भ्रातुरमर्षणः ।
शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।।३०।।
स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् ।
सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ।।३१।।
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः ।
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ।।३२।।
हीयमानमथापश्यत्सुग्रीवं वानरेश्वरम् ।
ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ।।३३।।
शरं च वीक्षते वीरो वालिनो वधकारणात् ।
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसंनिभः ।।३४।।
राघवेण महाबाणो वालिवक्षसि पातितः ।
वेगेनाभिहतो वाली निपपात महीतले ।।३५।।
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरः ।
आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ।।३६।।
सौहार्दं भ्रातृयुक्तं हि तदिदं जातमन्यथा ।
एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः ।।३७।।

अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे ।
करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः ॥३८॥

इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् ।
तद्वालिवचनाच्छान्तः कुर्वन् युक्तमतन्द्रितः ॥३९॥

जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् ।
तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वात्मजंस्थितम्॥४०॥

संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥४१॥

इत्युक्त्वाथ विवृत्ताक्षः शरसंपीडितो भृशम् ।
विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥४२॥

सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ।
समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥४३॥

ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् ।
अभ्यषिञ्चन्न सुहृदः सहस्राक्षमिवामराः ॥४४॥

[ राज्ये सुग्रीवस्य यौवराज्ये च अङ्गदस्यभिषेकः वानराणां सीतान्वेषणम् ]

रामस्य तु वचः कुर्वन् सुग्रीवो हरिपुंगवः ।
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥४५॥

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥४६॥

समीक्ष्य विमलं व्योम गतविद्युद्वलाहकम् ।
सुग्रीवः सत्त्वसंपन्नश्चकार मतिमुत्तमाम् ॥४७॥
संदिदेशातिमतिमान् नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥४८॥
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ।
संचोदयित्वा त्वरिता यूथानां जग्मुरग्रतः ॥४९॥
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ।
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् ॥५०॥
स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ।
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥५१॥
दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥५२॥
ताराङ्गदादिसहितः प्लवगः पवनात्मजः ।
अगस्त्यचरितामाशां दक्षिणां हरियूथपः ॥५३॥
सुग्रीवेण यथोद्दिष्टं तं देशमुपचक्रमे ।
अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ॥५४॥
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ।
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ॥५५॥
संनिवेशं ततश्चक्रुः सहिता वानरोत्तमाः ।
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ॥५६॥

विषेदुः सहसा सर्वे कथं कार्यमिति ब्रुवन् ।
अनेकशतसाहस्रीं विषण्णाम् हरिवाहिनीम् ।।५७।।

जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ।
हनुमन् हरिराजस्य सुग्रीवस्य समो ह्यसि ।।५८।।

तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि ।
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् ।।५९।।

संस्तूयमानो हनुमान् व्यवर्धत महाबलः ।
समाविध्य च लाङ्गूलं हर्षाच्च बलमेयिवान् ।।६०।।

———

## सुन्दरकाण्डम्

[ सागरमुल्लंघ्य हनूमतः लङ्कागमनम् अशोकवनिकामध्ये सीतायाः दर्शनञ्च ]

स सूर्याय महेन्द्राय पवनाय स्वयम्भुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ।।१।।
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ।
मार्गमालोकयन् दूरादूर्ध्वं प्रणिहितेक्षणः ।।२।।
रुरोध हृदये प्राणानाकाशमवलोकयन् ।
उत्पपाताथ वेगेन वेगवानविचारयन् ।।३।।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ।।४।।
स सागरमनाधृष्यमतिक्रम्य महाबलः ।
निशि लंकां महासत्त्वो विवेश कपिकुञ्जरः ।।५।।
रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः ।
राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः ।।६।।
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनुमानरिसूदनः ।।७।।
अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ।
ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।।८।।

यावत्सीतां हि पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लंकां विचिनोमि पुनः पुनः ।।९।।
अशोकवनिका चेयं दृश्यते या महाद्रुमा ।
इमामभिगमिष्यामि न हीयं विचिता मया ।।१०।।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ।
काञ्चनीं शिंशपामेकां ददर्श हनुमान् कपिः ।।११।।
तामारुह्य महाबाहुः शिंशपां पर्णसंवृताम् ।
स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।।१२।।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।।१३।।
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशम् ।।१४।।
तर्कयामास सीतेति कारणैरुपपादिभिः ।
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।।१५।।
तान्याभरणजालानि गात्रशोभीन्यलक्षयत् ।
तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।।१६।।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ।
विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् ।।१७।।
स्रस्तमाल्याम्बरधरो वैदहीमन्वचिन्तयत् ।
अशोकवनिकामेव प्राविशत्संततद्रुमाम् ।।१८।।

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥१९॥
कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये ।
न रामस्तपसा देवि न बलेन न विक्रमैः ॥२०॥
न धनेन मया तुल्यस्तेजसा यशसापि वा ।
तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ॥२१॥
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥२२॥
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ।
एवं हि ते भवेत्स्वस्ति संप्रदाय रघूत्तमे ॥२३॥
अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ।
सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः ॥२४॥
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ।
द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् ॥२५॥
मम त्वां प्रातराशार्थमालभन्ते महानसे ।
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥२६॥

[ रामस्य कुशलं निवेद्य तस्याङ्गुलीयकं सीतायै दत्त्वा चूडामणिमादाय हनूमतस्ततः प्रस्थानम् ]

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥२७॥

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ॥२८॥
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ।
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात्पितुः ॥२९॥
सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ।
तेन तत्र महारण्ये मृगयां परिधावता ॥३०॥
राक्षसा निहताः शूरा बहवः कामरूपिणः ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥३१॥
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ।
आससाद वने मित्रं सुग्रीवं नाम वानरम् ॥३२॥
सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ।
अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः ॥३३॥
यथारूपां यथावर्णां यथालक्ष्मीं च निश्चिताम् ।
अश्रौषं राघवस्याहं सेयमासादिता मया ॥३४॥
जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ।
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ॥३५॥
सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः ।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥३६॥
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ।
उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ॥३७॥

सीता च नाम नाम्नाहं भार्या रामस्य धीमतः ।
तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः ॥३८॥
दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ।
अहं रामस्य संदेशाद्देवि दूतस्तवागतः ॥३९॥
वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ।
अचिराद्राघवो देवि त्वामितो नयितानघे ॥४०॥
रामनामांकितं चेदं पश्य देव्यङ्गुलीयकम् ।
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ॥४१॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ।
भर्तारमिव संप्राप्ता जानकी मुदिताभवत् ॥४२॥
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ।
एवमुक्ता हनुमता सीता सुरसुतोपमा ॥४३॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ॥४४॥
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् ।
शिरसा वन्द्य वैदेहीं गमनायोपचक्रमे ॥४५॥
ज्ञात्वा संप्रस्थितं देवी वानरं मारुतात्मजम् ।
बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ॥४६॥
कुशलं हनुमन् ब्रूयाः सहितौ रामलक्ष्मणौ ।
यथा स च महाबाहुर्मां तारयति राघवः ॥४७॥

अस्माद्दुःखाम्बुसंरोधात् त्वं समाधातुमर्हसि ।
अथाब्रवीन्महातेजा हनुमान् मारुतात्मजः ॥४८॥
इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ।
हत्वा तु समरे क्रूरे रावणं सहबान्धवम् ॥४९॥
राघवौ त्वां विशालाक्षि स्वां पुरीं प्रापयिष्यतः ।
प्रणम्य शिरसा देवीं गमनायोपचक्रमे ॥५०॥

[ हनूमता रावणोपवनविध्वसनम्, इन्द्रजितप्रयुक्तब्रह्मास्त्रेण तस्य बन्धनं रावणान्तिके आनयनञ्च ]

तस्माद्देशादपक्रम्य चिन्तयामास वानरः ।
इदमस्य नृशंसस्य नन्दनोपममुत्तमम् ॥५१॥
इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
अस्मिन् भग्ने ततः कोपं करिष्यति दशाननः ॥५२॥
तमो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः ।
ऊरुवेगेन महता द्रुमान् क्षेप्तुमथारभत् ॥५३॥
ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनम् ।
रावणस्य समीपे तु राक्षस्यो विकृताननाः ॥५४॥
विरूपं वानरं भीममाख्यातुमुपचक्रमुः ।
अशोकवनिकामध्ये राजन् भीमवपुः कपिः ॥५५॥
तेन त्वद्भुतरूपेण यत्तत्तव मनोहरम् ।
नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥५६॥

राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ।
हुताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ।।५७।।
आत्मनः सदृशाञ्शूरान् किंकरान्नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ।।५८।।
तेषामशीतिसाहस्रं किंकराणां तरस्विनाम् ।
निर्ययुर्भवनात्तस्मात्कूटमुद्गरपाणयः ।।५९।।
स्वामिसंदेशनिःशंकास्ततस्ते राक्षसाः कपिम् ।
चित्रैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ।।६०।।
स तैः परिवृतः शूरैः सर्वतः स महाबलः ।
आससादायसं भीमं परिघं तोरणाश्रितम् ।।६१।।
स तं परिघमादाय जघान रजनीचरान् ।
ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः ।।६२।।
निहतान् किंकरान् सर्वान् रावणाय न्यवेदयन् ।
रावणः संवृताकारश्चकार मतिमुत्तमाम् ।।६३।।
मनः समाधाय तदेन्द्रकल्पं
समादिदेशेन्द्रजितं स रोषात् ।।
त्वमात्मनश्चापि समीक्ष्य सारं
कुरुष्व वेगं स्वबलानुरूपम् ।।६४।।
ततस्तैः स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः ।
युद्धोद्धतः कृतोत्साहः संग्रामं प्रत्यपद्यत ।।६५।।

तावुभौ वेगसंपन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥६६॥
ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ।
संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥६७॥
तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः ।
अभवन्निर्विचेष्टश्च पपात च महीतले ॥६८॥
हनूमांश्चिन्तयामास वरदानं पितामहात् ।
अस्त्रेणापि हि बद्धस्य भयं मम न जायते ॥६९॥
ग्रहणे वापि रक्षोभिर्महत् मे गुणदर्शनम् ।
राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥७०॥
ततस्तं राक्षसा दृष्ट्वा निर्विचेष्टमरिन्दमम् ।
बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥७१॥
कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ।
समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥७२॥

[ रावणाज्ञया राक्षसैः हनूमतः लाङ्गूलस्य प्रज्वालनं हनूमता च लङ्कायाः दाहः ]

राक्षसाधिपतिं चापि ददर्श कपिसत्तमः ।
तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः ॥७३॥
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ।
अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयम् ॥७४॥

राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ।
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।।७५।।
राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ।।७६।।
पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।।७७।।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ।
तस्य भार्या वने नष्टा सीता पतिमनुव्रता ।।७८।।
स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ।
ऋष्यमूकमनुप्राप्तः सुग्रीवेण समागतः ।।७९।।
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
हरीन् प्रेषयामास दिशः सर्वा हरीश्वरः ।।८०।।
अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ।
समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ।।८१।।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ।
तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ।।८२।।
मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ।
तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।।८३।।
आज्ञापयत्तस्य वधं रावणः क्रोधमूर्च्छितः ।
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।।८४।।

निवेदितवतो दौत्यं नानुमेने विभीषणः ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥८५॥
साधुर्वा यदि वासाधुः परैरेष समर्पितः ।
ब्रुवन् परार्थं परवान्न दूतो वधमर्हति ॥८६॥
तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥८७॥
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।
कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ॥८८॥
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ।
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ॥८९॥
वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः ।
तैलेन परिषिच्याथ तेऽग्निं तत्रावपातयन् ॥९०॥
परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ।
हनूमांश्चारयामास राक्षसानां महापुरीम् ॥९१॥
उत्पपाताथ वेगेन ननाद च महाकपिः ।
वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ॥९२॥
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ।
रक्षिणस्तान् पुनः सर्वान् सूदयामास मारुतिः ॥९३॥
वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ।
तेषु तेषु महार्हेषु भवनेषु महायशाः ॥९४॥

गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ।
हनूमता वेगवता वानरेण महात्मना ॥९५॥
लंकापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ।
लंकां समस्तां संदीप्य लाङ्गूलाग्निं महाबलः ॥९६॥

[ समुद्रे लाङ्गूलं निर्वाप्य हनूमतः रामान्तिके गमनं संदेशं कथयित्वा रामाय सीताभिज्ञानदानञ्च ]

निर्वापयामास तदा समुद्रे हरिसत्तमः ।
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ॥९७॥
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ।
स लिलिंघयिषुर्भीमं सलीलं लवणार्णवम् ॥९८॥
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ।
ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः ॥९९॥
निपपात महेन्द्रस्य शिखरे पादपाकुले ।
हृष्टा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥१००॥
ततो दृष्टेति वचनं महार्थममृतोपमम् ।
निशम्य मारुतेः सर्वे मुदिता वानराभवन् ॥१०१॥
तऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः ।
निपेतुर्हरिराजस्य समीपे राघवस्य च ॥१०२॥
चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ।
श्रुत्वा तु वचनं तेषां हनुमान् मारुतात्मजः ॥१०३॥

प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ।
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ॥१०४॥
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ।
तत्र लंकेति नगरी रावणस्य दुरात्मनः ॥१०५॥
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ॥१०६॥
एकवेणीधरा दीना त्वयि चिन्तापरायणा ।
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥१०७॥
इति मामब्रवीत्सीता कृशाङ्गी वरवर्णिनी ।
सर्वथा सागरजले संतारः प्रविधीयताम् ॥१०८॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्या-
द्वाचा संपूर्णं वायुपुत्रः शशंस ॥१०९॥

तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥११०॥
अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ।
किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे ॥१११॥
एवमुक्तस्तु हनुमान् राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ॥११२॥

## युद्धकाण्डम्

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः ।।१।।

अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ।
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।।२।।

व्यादिदेश महावीर्यान् वानरान् वानरर्षभः ।
ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः ।।३।।

गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम्।।४।।

ते सह्यं समतिक्रम्य मलयं च महागिरिम् ।
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ।।५।।

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे साधु सेना निवेशिता ।।६।।

लंकायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ।।७।।

अब्रवीद्राक्षसान् सर्वान् ह्रिया किंचिदवाङ्मुखः ।
धर्षिता च प्रविष्टा च लंका दुष्प्रसहा पुरी ।।८।।

तेन वानरमात्रेण दृष्टा सीता च जानकी ।
उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् ।।९।।
चापानि च सबाणानि खड्गांश्च विपुलाञ्शितान् ।
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ।।१०।।
अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा ।
अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् ।।११।।
कृपणं च हनूमन्तं लंका येन प्रधर्षिता ।
तान् गृहीतायुधान्सर्वान्वारयित्वा विभीषणः।।१२।।
अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ।
अयशस्यममानुष्यं परदाराभिमर्शनम् ।।१३।।
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ।।१४।।

[ रावणस्य परुषवचनैस्तिरस्कृतस्य विभीषणस्य रामशरणागतिः, रावणंनिहत्य विभीषणं लंकाधिकाधिपतिं कर्तुं रामस्य प्रतिज्ञा च ]

विनश्येद्धि पुरी लंका शूराः सर्वे च राक्षसाः ।
रामस्य दयिता पत्नी स्वयं यदि न दीयते ।।१५।।
सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ।।१६।।
वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ।।१७।।

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन् मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ।।१८।।
अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
स त्वं भ्रातासि मे राजन् ब्रूहि मां यद्यदिच्छसि ।।१९।
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ।।२०।।
दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ।।२१।।
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ।।२२।।
इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ।।२३।।
उवाच च महाप्राज्ञः स्वरेण महता महान् ।
सुग्रीवं तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ।।२४।।
रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ।।२५।।
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् ।
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।।२६।।
साधु निर्यात्यतां सीता रामायेति पुनः पुनः ।
स च न प्रतिजग्राह रावणः कालचोदितः ।।२७।।

सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥२८॥
सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥२९॥
अथ संस्कारसंपन्नो हनूमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥३०॥
दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ।
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥३१॥
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता ।
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ॥३२॥
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः ।
अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ॥३३॥
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ।
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ॥३४॥
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ।
राघवेणाभये दत्ते संनतो रावणानुजः ॥३५॥
खात्पपातावनिं हृष्टो भक्तैरनुचरैः सह ।
अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः ॥३६॥
भवद्गतं मे राज्यं च जीवितं च सुखानि च ।
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥३७॥

अहं हत्वा दशग्रीवं सप्रहस्तं सहानुजम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ।।३८।।

[ नवनिर्मितेन सेतुना ससैन्यस्य रामस्य समुद्रतरणं लंकामुपगम्य दौत्येन अङ्गदस्य रावणान्तिके प्रेषणञ्च ]

ततोऽतिसृष्टा रामेण सर्वतो हरियूथपाः ।
समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः ।।३९।।
इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ।
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ।।४०।।
तानि कोटिसहस्राणि वानराणां महौजसाम् ।
बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ।।४१।।
अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ।
जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ।।४२।।
तां रात्रिमुषितास्तत्र सुवेले हरिपुंगवाः ।
लंकायां ददृशुर्वीरा वनान्युपवनानि च ।।४३।।
ततः काले महाबाहुर्बलेन महता वृतः ।
प्रस्थितः पुरतो धन्वी लंकामभिमुखः पुरीम् ।।४४।।
लंकायास्तूत्तरद्वारं शैलशृंगमिवोन्नतम् ।
रामः सहानुजो धन्वी जुगोप च रुरोध च ।।४५।।
अङ्गदं वालितनयं समाहूयेदमब्रवीत् ।
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे ।।४६।।

अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ।
न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ।।४७।।

युध्यस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस ।
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ।।४८।।

[ रामसन्देशं निवेद्य निवर्त्तिते अङ्गदे शत्रुवधार्थं रामस्यादेशः वानरसेनायाः प्रस्थानञ्च ]

जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ।
सोऽतिपत्य मुहूर्तेन श्रीमान् रावणमन्दिरम् ।।४९।।

ददर्शासीनमव्यग्रं रावणं सचिवैः सह ।
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ।।५०।।

सामात्यं श्रावयामास निवेद्यात्मानमात्मना ।
अमर्षवशमापन्नो निशाचरगणेश्वरः ।।५१।।

ततः स रोषताम्राक्षः शशास सचिवांस्तदा ।
गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ।।५२।।

जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ।
स तान् बाहुद्वये सक्तानादाय पतगानिव ।।५३।।

प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ।
तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः ।।५४।।

भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ।
व्यथयन् राक्षसान् सर्वान् हर्षयंश्चापि वानरान् ।।५५

स वानराणां मध्ये तु रामपार्श्वमुपागतः ।
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।।५६।।
क्षिप्रमाज्ञापयामास वानरान् द्विषतां वधे ।
उद्यम्य गिरिश्रृंगाणि शिखराणि महान्ति च।।५७।।
तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ।
लंकां तामभिधावन्ति महावारणसंनिभाः ।।५८।।

[ रावणादेशेन तत्सैन्यस्याध्यामनं युद्धारम्भश्च ]

ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ।
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ।।५९।।
निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः ।
एतस्मिन्नन्तरे घोरः संग्रामः समवर्तत ।।६०।।
रक्षसां वानराणां च यथा देवासुरे पुरा ।
ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः ।।६१।।
निजघ्नुर्वानरान् घोराः कथयन्त. स्वविक्रमान् ।
वानराश्च महावीर्या राक्षसाञ्जघ्नुराहवे ।।६२।।
राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ।
तस्याभिचङ्क्रम्य रथं सचक्रं
साश्वध्वजच्छत्रमहापताकम् ।
ससारथिं साशनिशूलखड्गं
रामः प्रचिच्छेद शरैः सुपुङ्खैः ।।६३।।

यो वज्रपाताशनिसंनिपाता-
न्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्त-
श्चचाल चापं च मुमोच वीरः ॥६४॥
तं विह्वलन्तं प्रसमीक्ष्य रामः
समाददे दीप्तमथार्धचन्द्रम् ।
तेनार्कवर्णं सहसा किरीटं
चिच्छेद रक्षोधिपतेर्महात्मा ॥६५॥
तं निर्विषाशीविषसंनिकाशं
शान्तार्चिषं सूर्यमिवाप्रकाशम् ।
गतश्रियं कृत्तकिरीटकूट-
मुवाच रामो युधि राक्षसेन्द्रम् ॥६६॥

गच्छानुजानामि रणार्दितस्त्वं
प्रविश्य रात्रिचरराज लंकाम् ।
आश्वास्य निर्याहि रथी च धन्वी
तदा बलं द्रक्ष्यसि मे रथस्थः ॥६७॥

स एवमुक्तो हतदर्पहर्षो
निकृत्तचापः स हताश्वसूतः ।
शरार्दितः कृत्तमहाकिरीटो
विवेश लंकां सहसा स राजा ॥६८॥

[ रावणादेशेन राक्षसैः प्रतिबोधितस्य कुम्भकर्णस्य तत्सकाशमागमनं भ्रातुराज्ञां शिरसि निधाय रामेण सह योद्धुं तस्य निश्चयश्च ]

विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ।
ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम् ॥६९॥
ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ।
जग्मुः परमसंभ्रान्ताः कुम्भकर्णनिवेशनम् ॥७०॥
कुम्भकर्णं महानिद्रं सहिताः प्रत्यबोधयन् ।
वारणानां सहस्रं तु शरीरेऽस्य प्रधावितम् ॥७१॥
कुम्भकर्णस्ततो बुद्धः स्पर्शं परमबुध्यत ।
चारयन् सर्वतो दृष्टिं तान् ददर्श निशाचरान् ॥७२॥
किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः ।
कच्चित् सुकुशलं राज्ञो भयं वा नेह किंचन ॥७३॥
एवं ब्रुवाणं संरब्धं कुम्भकर्णं महाबलम् ।
यूपाक्षः सचिवो राज्ञः कृताञ्जलिरुवाच ह ॥७४॥
द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुंगवः ।
गमने क्रियतां बुद्धिर्भ्रातरं संप्रहर्षय ॥७५॥
तथेत्युक्त्वा महाबाहुः शयनादुत्पपात ह ।
सोऽभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च ॥७६॥
ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम् ।
भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥७७॥

संरक्तनयनः कोपाद्रावणं वाक्यमब्रवीत् ।
किमर्थमहमादृत्य त्वया राजन् विबोधितः ॥७८॥
भ्रातरं रावणः क्रुद्धं कुम्भकर्णमवस्थितम् ।
रोषेण परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥७९॥
एष दाशरथी रामः सुग्रीवसहितो बली ।
समुद्रं सबलस्तीर्त्वा मूलं नः परिकृन्तति ॥८०॥
तदेतद्भयमुत्पन्नं त्रायस्वेह महाबल ।
भ्रातुरर्थे महाबाहो कुरु कर्म सुदुष्करम् ॥८१॥
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ।
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः ॥८२॥
रामस्याद्य प्रमार्जामि निर्वैरो हि सुखी भव ।
प्रणम्य शिरसा तस्मै संप्रतस्थे महाबलः ॥८३॥

[ रामेण सह कुम्भकर्णस्य युद्धं तद्वधश्च ]

स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् ।
अर्दयन् सुमहाकायः समन्ताद्व्याक्षिपद्रिपून ॥८४॥
राघवो राक्षसं रोषादभिदुद्राव वेगितः ।
स तस्य चापनिर्घोषात्कुपितो राक्षसर्षभः ॥८५॥
अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ।
अथाददे सूर्यमरीचिकल्पं
स ब्रह्मदण्डान्तककालकल्पम् ॥८६॥

अरिष्टमैन्द्रं निशितं सुपुङ्खं
राम: शरं मारुततुल्यवेगम् ।
तं वज्रजाम्बूनदचारुपुङ्खं
राम: प्रचिक्षेप निशाचराय ॥८७॥

स तन्महापर्वतकूटसंनिभं
सुवृत्तदंष्ट्रं चलचारुकुण्डलम् ।
चकर्त रक्षोऽधिपते: शिरस्तथा
यथैव वृत्रस्य पुरा पुरन्दर: ॥८८॥

तं श्रुत्वा निहतं संख्ये कुम्भकर्णं महाबलम् ।
रावण: शोकसंतप्तो मुमोह च पपातच ॥८९॥

[ कुम्भकर्णस्य वधं श्रुत्वा इन्द्रजितो युद्धे आगमनं लक्ष्मणेन तस्य वधश्च ]

ततस्तु राजानमुदीक्ष्य दीनं
शोकार्णवे संपरिपुप्लुवानम् ।
रथर्षभो राक्षसराजसूनु-
स्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥९०॥

अद्यैव रामं सह लक्ष्मणेन
संतर्पयिष्यामि शरैरमोघै: ।
स एवमुक्त्वा त्रिदशेन्द्रशत्रु-
रापृच्छ्य राजानमदीनसत्त्व: ॥९१॥

समारुरोहानिलतुल्यवेगं
रथं खरश्रेष्ठसमाधियुक्तम् ।
जगाम सहसा तत्र यत्र युद्धमरिंदमः ॥९२॥

स तु नालीकनाराचैर्गदाभिर्मुसलैरपि ।
रक्षोभिः संवृतः संख्ये वानरान् विचकर्त ह ॥९३॥

ससर्ज निशितान् बाणानिन्द्रजित् समितिंजयः ।
ते विसृष्टा महावेगाः शराः सर्पविषोपमाः ॥९४॥

संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः ।
ततः सन्धाय सौमित्रिर्बाणानग्निशिखोपमान् ॥९५॥

मुमोच निशितांस्तस्मिन् सर्पानिव महाविषान् ।
येन शक्रो महातेजा दानवानजयत्प्रभुः ॥९६॥

तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ॥९७॥

लक्ष्मीवान् लक्ष्मणो वाक्यमर्थसाधकमात्मनः ।
धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ॥९८॥

पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ।
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ॥९९॥

लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ।
ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा ॥१००॥

स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रिजतः कायात् पातयामास भूतले ।।१०१।।

[ पुत्रवधं निशम्य रावणस्य विलपनं रणक्षेत्रे आगमनं
रामरावणयोर्युद्धारम्भश्च ]

हतस्तु निपपाताशु धरण्यां रावणात्मजः ।
स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ।।१०२।।
पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः ।
स तु दीर्घं विनिःश्वस्य मुहूर्तं ध्यानमास्थितः।।१०३।।
उवाच च समीपस्थान् राक्षसान् राक्षसेश्वरः ।
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभैः ।।१०४।।
राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ।
अनुप्रयान्तु मां सर्वे येऽवशिष्टा निशाचराः ।।१०५।।
एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम् ।
ततः प्रजवनाश्वेन रथेन स महारथः ।।१०६।।
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ।
तेषां तु रथघोषेण राक्षसानां महात्मनाम् ।।१०७।।
वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ।
तेषां तु तुमुलं युद्धं बभूव कपिरक्षसाम् ।।१०८।।
ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः ।
वानराणामनीकेषु चकार कदनं महत् ।।१०९।।

स संख्ये राममासाद्य क्रोधसंरक्तलोचनः ।
व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥११०॥
ताञ्शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ।
राघवो रावणं तूर्णं रावणो राघवं तदा ॥१११॥
अन्योन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ।
भूमौ स्थितस्य रामस्य रथस्थस्य च राक्षसः ॥११२॥

[ इन्द्रेण प्रेषितं रथमारुह्य रामस्य युद्धकरणम् ]

न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ।
देवराजेन संदिष्टो रथमारुह्य मातलिः ॥११३॥
अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ।
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः ॥११४॥
सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते ।
दत्तस्तव महासत्त्व श्रीमाञ्शत्रुनिबर्हण ॥११५॥
इदमैन्द्रं महच्चापं कवचं चाग्निसंनिभम् ।
शराश्चादित्यसंकाशाः शक्तिश्च विमला शिता ॥११६॥
आरुह्येमं रथं वीर राक्षसं जहि रावणम् ।
इत्युक्तः संपरिक्रम्य रथं समभिवाद्य च ॥११७॥
आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन् ।
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे ॥११८॥

रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ।
भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥११९॥

हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात् ।
हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥१२०॥

सूतस्तु रथनेतास्य तदवस्थं समीक्ष्य तम् ।
शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥१२१॥

क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ।
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ॥१२२॥

त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ।
अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥१२३॥

तव विश्रमहेतोश्च तथैषां रथवाजिनाम् ।
रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥१२४॥

आज्ञापय यथा तत्त्वं वक्ष्यस्यरिनिषूदन ।
तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥१२५॥

संतुष्टस्तेन वाक्येन रावणस्तस्य सारथेः ।
प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥१२६॥

रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु ।
ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ॥१२७॥

[ अगस्त्येन निर्दिष्टमादित्यहृदयं जप्त्वा रामस्य रावणध्वजकर्तनं मातलिस्मारितेन पैतामहेनास्त्रेण रावणवधश्च ]

रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥१२८॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥१२९॥
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ।
एवमुक्त्वा तदागस्त्यो जगाम च यथागतम् ॥१३०॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ॥१३१॥
ततो रामोऽभिसंक्रुद्धश्चापमायम्य वीर्यवान् ।
रावणध्वजमुद्दिश्य मुमोच निशितं शरम् ॥१३२॥
स निकृत्तोऽपतद्भूमौ रावणस्य रथध्वजः ।
संधाय धनुषा रामः क्षुरमाशीविषोपमम् ॥१३३॥
रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् ।
तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥१३४॥
तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः ।
छिन्नमात्रं तु तच्छीर्षं पुनरन्यत् स्म दृश्यते ॥१३५॥
एकमेकशतं छिन्नं शिरसां तुल्यवर्चसाम् ।
अथ संस्मारयामास राघवं मातलिस्तदा ॥१३६॥

विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ।
ततः संस्मारितो रामस्तेन वाक्येन मातले: ।।१३७।।

जग्राह सशरं दीप्तं निःश्वसन्तमिवोरगम् ।
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।।१३८।।

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ।।१३९।।

स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् ।
चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ।।१४०।।

स विसृष्टो महावेगः शरीरान्तकरः शरः ।
बिभेद हृदयं तस्य रावणस्य दुरात्मनः ।।१४१।।

[ रामाज्ञया विभीषणेन रावणस्य मृतकसंस्कारः लक्ष्मणेन लंकायां विभीषणस्य राज्याभिषेकश्च ]

गतासुर्भीमवेगस्तु नैऋतेन्द्रो महाद्युतिः ।
रामः शोकसमाविष्टमित्युवाच विभीषणम् ।।१४२।।

नैवं विनष्टाः शोच्यन्ते क्षत्रधर्ममवस्थिताः ।
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।।१४३।।

त्वत्सकाशाद्दशग्रीवः संस्कारं विधिपूर्वकम् ।
प्राप्तुमर्हति धर्मज्ञ त्वं यशोभाग्भविष्यति ।।१४४।।

राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ।
संस्कारेणानुरूपेण योजयामास रावणम् ।।१४५।।

राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ।
दिव्यं तं रथमास्थाय दिवमेवारुरोह सः ॥१४६॥
अब्रवीच्च तदा रामः समीपपरिवर्तिनम् ।
सौमित्रिं सत्त्वसंपन्नं लक्ष्मणं दीप्ततेजसम् ॥१४७॥
विभीषणमिमं सौम्य लंकायामभिषेचय ।
एवमुक्तस्तु सौमित्री राघवेण महात्मना ॥१४८॥
आदिदेश महासत्त्वान् समुद्रसलिलानये ।
अतिशीघ्रं ततो गत्वा वानरास्ते महाबलाः ॥१४९॥
आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ।
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ॥१५०॥
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
अब्रवीद्राघवो वाक्यं हनुमन्तं प्लवङ्गमम् ॥१५१॥

[ विजयस्य सन्देशं सीतां श्रावयितुं रामेण हनूमतः प्रेषणं सन्देशं सीतायै निवेद्य ततस्तस्य निवर्तनञ्च ]

अनुमान्य महाराजमिमं सौम्य विभीषणम् ।
प्रविश्य नगरीं लंकां कौशलं ब्रूहि मैथिलीम् ॥१५२॥
वैदेह्यै मां कुशलिनं ससुग्रीवं सलक्ष्मणम् ।
आचक्ष्व जयतां श्रेष्ठ रावणं च मया हतम् ॥१५३॥
प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ।
इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः ॥१५४॥

प्रविवेश पुरीं लंकां पूज्यमानो निशाचरैः ।
ददर्श मृजया हीनां सातङ्कामिव रोहिणीम् ॥१५५॥
निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ।
सौम्यं दृष्ट्वा मुखं तस्या हनुमान् प्लवगोत्तमः॥१५६॥
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ।
एवमुक्ता हनुमता वैदेही जनकात्मजा ॥१५७॥
अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरोत्तम ।
हर्षयन् मैथिलीं वाक्यमुवाचेदं महाद्युतिः ॥१५८॥
पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये सलक्ष्मणम् ।
तामेवमुक्त्वा राजन्तीं सीतां साक्षादिवश्रियम् ॥१५९॥
आजगाम महावेगो हनुमान् यत्र राघवः ।
स उवाच महाप्राज्ञमभिगम्य प्लवङ्गमः ॥१६०॥
मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ।
पूर्वकात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ॥१६१॥

[रामाज्ञया विभीषणेन सीताया आनयनं तच्चारित्र्ये रामेण सन्देहकरणञ्च]

भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ।
एवमुक्तो हनुमता रामो धर्मभृतां वरः ॥१६२॥
उवाच मेघसंकाशं विभीषणमुपस्थितम् ।
इह सीतां शिरःस्नातामुपस्थापय मा चिरम्॥१६३॥

एवमुक्तस्तु रामेण त्वरमाणो विभीषणः ।
प्रविश्यान्तःपुरं सीतां स्वाभिः स्त्रीभिरचोदयत्।।१६४।।
ततः सीतां शिरःस्नातां युवतीभिरलंकृताम् ।
आरोप्य शिबिकां दीप्तां परार्घ्याम्बरसंवृताम्।।१६५।।
रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ।
रामस्योपानयत् सीतां सन्निकर्षं विनीतवत् ।।१६६।।
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि ।।१६७।।
रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ।
तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम्।।१६८।।
हृदयान्तर्गतं भावं व्याहर्तुमुपचक्रमे ।
एषाऽसि निर्जिता भद्रे शत्रुं जित्वा मया रणे ।।१६९।।
पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ।
गतोऽस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता ।।१७०।।
अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ।
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।।१७१।।
विदितश्चास्तु ते भद्रे योऽयं रणपरिश्रमः ।
स तीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ।।१७२।।
तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ।
एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ।।१७३।।

[ स्वचारित्र्ये रामकृतं सन्देहं श्रुत्वा सीताया विलपनं चिताकरणाय लक्ष्मणं प्रति संकेतश्च ]

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् ।
राघवेण सरोषेण भृशं प्रव्यथिताभवत् ॥१७४॥

ततो बाष्पपरिक्लिष्टं प्रमार्जन्ती स्वमाननम् ।
शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥१७५॥

किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥१७६॥

न तथास्मि महाबाहो यथा त्वमवगच्छसि ।
प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ॥१७७॥

अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात् ।
मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ॥१७८॥

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥१७९॥

एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ।
अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥१८०॥

चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥१८१॥

एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा ।
अमर्षवशमापन्नो राघवाननमैक्षत ॥१८२॥

[ लक्ष्मणेन कृतायां चितायां सीतायाः प्रवेशः लोकपालैः तच्चारित्र्यस्य प्रशंसनञ्च ]

स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥१८३॥
अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् ।
उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥१८४॥
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥१८५॥
कर्मणा मनसा वाचा यथा नातिचराम्यहम् ।
राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥१८६॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निस्सङ्गेनान्तरात्मना ॥१८७॥
ततो हि दुर्मना रामः श्रुत्वैव वदतां गिरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥१८८॥
ततो वैश्रवणो राजा यमश्चामित्रकर्शनः ।
सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥१८९॥
षडर्धनयनः श्रीमान् महादेवो वृषध्वजः ।
कर्ता सर्वस्य लोकस्य ब्रह्मा वेदविदां वरः ॥१९०॥
आगम्य नगरीं लंकामभिजग्मुश्च राघवम् ।
अब्रुवंस्त्रिदशश्रेष्ठाः प्राञ्जलिं राघवम् स्थितम् ॥१९१॥

उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ।
इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः ॥१९२॥
अब्रवीत्त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः ।
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ॥१९३॥
इति ब्रुवन्तं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ।
अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम ॥१९४॥
भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः ।
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥१९५॥

[ पावकेन वैदेह्याः रामाय दानं तया च सह पुष्पकमारुह्य रामस्य अयोध्यां प्रति प्रस्थानञ्च ]

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् ।
अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥१९६॥
ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ।
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ॥१९७॥
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ।
सुवृत्ता वृत्तशौण्डीर न त्वामतिचचार ह ॥१९८॥
विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव ।
एवमुक्तो महातेजा द्युतिमान् दृढविक्रमः ॥१९९॥
अब्रवीत्त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ।
बालिशः खलु कामात्मा रामो दशरथात्मजः ॥२००॥

इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ।
प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रय: ॥२०१॥
उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम् ।
काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमा: ॥२०२॥
विमानै: सूर्यसंकाशैर्हृष्टा जग्मु: सुरा दिवम् ।
तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम् ॥२०३॥
अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषण: ।
पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभम् ॥२०४॥
तदिदं मेघसंकाशं विमानमिह तिष्ठति ।
तेन यास्यसि यानेन त्वमयोध्यां गतज्वर: ॥२०५॥
आरुरोह ततो रामस्तद्विमानमनुत्तमम् ।
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ॥२०६॥
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ।
ततस्तत्पुष्पकं दिव्यं सुग्रीव: सह सेनया ॥२०७॥
अध्यारोहत्त्वरञ्शीघ्रं सामात्यश्च विभीषण: ।
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ॥२०८॥

[ अयोध्यामुपगम्य रामेण हनूमतः भरतान्तिके प्रेषणं तेन च भरतं प्रति रामकुशलनिवेदनञ्च ]

राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ।
अयोध्यां तु समालोक्य चिन्तयामास राघव: ॥२०९॥

चिन्तयित्वा हनूमन्तमुवाच प्लवगोत्तमम् ।
शृङ्गिबेरपुरं प्राप्य गुहं गहनगोचरम् ॥२१०॥
निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ।
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च ॥२११॥
निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ।
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ॥२१२॥
सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ।
इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः ॥२१३॥
मानुषं धारयन् रूपमयोध्यां त्वरितो ययौ ।
आससाद द्रुमान् फुल्लान्नन्दिग्रामसमीपगान् ॥२१४॥
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ।
उवाच प्राञ्जलिर्वाक्यं हनुमान् मारुतात्मजः ॥२१५॥
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् ।
अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् ॥२१६॥

[ रामागमनं श्रुत्वा पुरवासिनां नन्दिग्रामे आगमनं, रामविमानावरोहण, रामभरतसमागमश्च ]

अस्मिन् मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः ।
श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ॥२१७॥
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ।
दैवतानि च सर्वाणि चैत्यानि नगरस्य च ॥२१८॥

सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ।
सर्वे वादित्रकुशला गणिकाश्चापि सङ्घशः ।।२१९।।
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् ।
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ।।२२०।।
विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान् ।
राजदारास्तथामात्याः सैन्याः सेनागणाङ्गणाः ।।२२१।।
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ।
पदातीनां सहस्रैश्च वीराः परिवृता ययुः ।।२२२।।
कृत्स्नं च नगरं तत्तु नन्दिग्राममुपागमत् ।
स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते ।।२२३।।
ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ।
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।।२२४।।
हंसयुक्तं महावेगं निष्पपात महीतले ।
आरोपितो विमानं तद्भरतः सत्यविक्रमः ।।२२५।।
ततो लक्ष्मणमासाद्य वैदेहीं चाभ्यवादयत् ।
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ।।२२६।।
सीतायाश्चरणौ पश्चाद्विनयादभ्यवादयत् ।
रामो मातरमासाद्य विषण्णां शोककर्शिताम् ।।२२७।।
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ।
अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ।।२२८।।

स मातृश्च ततः सर्वाः पुरोहितमुपागतम् ।
अवतीर्य विमानाग्रादवतस्थे महीतले ॥२२९॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।
उत्तरां दिशमागम्य जगाम धनदालयम् ॥२३०॥

[ नन्दिग्रामे जटादीनां त्यागः रथेन अयोध्यां प्रति गमनं तत्र रामस्याभिषेकश्च ]

शिरस्यञ्जलिमादाय कैकेय्यानन्दवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥२३१॥
जगदद्याभिषिक्तं त्वामनुपश्यतु सर्वतः ।
भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ॥२३२॥
तथेति प्रतिजग्राह निषसादासने शुभे ।
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः ॥२३३॥
महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन् ।
प्रतिकर्म च रामस्य कारयामास वीर्यवान् ॥२३४॥
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ।
प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः ॥२३५॥
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ।
ततः शत्रुघ्नवचनात् सुमन्त्रो नाम सारथिः ॥२३६॥
योजयित्वाभिचक्राम रथं सर्वाङ्गशोभनम् ।
अर्कमण्डलसंकाशं दिव्यं दृष्ट्वा रथोत्तमम् ॥२३७॥

प्रययौ रथमास्थाय रामो नगरमुत्तमम् ।
हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥२३८॥
ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ।
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ॥२३९॥
रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥२४०॥
कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ।
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ॥२४१॥
सलिलेन सहस्राक्षं वसवो वासवं यथा ।
ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ॥२४२॥
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ।
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ॥२४३॥
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ।
छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ॥२४४॥
श्वेतं च बालव्यजनं सुग्रीवो वानरेश्वरः ।
अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥२४५॥
सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ।
वैडूर्यमणिचित्रे च चन्द्ररश्मिविभूषिते ॥२४६॥
वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ ।
मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ॥२४७॥

अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ।
ददौ सा वायुपुत्राय तं हारमसितेक्षणा ।।२४८।।

नत्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः ।
विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन् ।।२४९।।

सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् ।
पूजितश्चैव रामेण किष्किन्धां प्राविशत्पुरीम् ।।२५०।।

विभीषणोऽपि धर्मात्मा सह तैर्नैऋतर्षभैः ।
लब्ध्वा कुलधनं राजा लंकां प्रायाद्विभीषणः ।।२५१।।

उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ।
आतिष्ठ धर्मज्ञ मया सहेमां
गां पूर्वराजाध्युषितां बलेन ।
तुल्यं मया त्वं पितृभिर्धृता या
तां यौवराज्ये धुरमुद्वहस्व ।।२५२।।

सर्वात्मना पर्यनुनीयमानो
यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानोऽपि च यौवराज्ये
ततोऽभ्यषिञ्चद्भरतं महात्मा ।।२५३।।

आजानुलम्बबाहुः स महास्कन्धः प्रतापवान् ।
लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ।।२५४।।

निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृशत् ।
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् ।।२५५।।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ।
रामभूतं जगदभूद्रामे राज्यं प्रशासति ।।२५६।।

------

## उत्तरकाण्डम्

[ देवैः रामस्याभिनन्दनं सीताविषयकं प्रवादं श्रुत्वा तस्याः निर्वासनाय रामस्य लक्ष्मण प्रत्यादेशश्च ]

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते ।
आजग्मुर्मुनयः सर्वे राघवं प्रतिनन्दितुम् ॥१॥

आजग्मुस्ते सहागस्त्या ये स्थिता दक्षिणां दिशम् ।
तान् संप्राप्तान् मुनीन् दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः॥२॥

पाद्यार्घ्यादिभिरानर्च गां निवेद्य च सादरम् ।
रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह ॥३॥

यथार्हमुपविष्टास्ते आसनेष्वृषिपुंगवाः ।
महर्षयो वेदविदो रामं वचनमब्रुवन् ॥४॥

दिष्टया त्वया हतो राजन् रावणो लोकरावणः ।
अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् ॥५॥

सोऽवध्यः सर्वभूतानां महामायाधरो युधि ।
श्रुत्वा तु तेषां वचनमृषीणां भावितात्मनाम् ॥६॥

विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ।
भगवन्तः कुम्भकर्णं रावणं च निशाचरम् ॥७॥

अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ।
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥८॥

कुम्भयोनिर्महातेजा राममेतदुवाच ह ।
शृणु राम यथावृत्तं तस्य तेजोबलं महत् ॥९॥
जघान शत्रून् येनासौ न च वध्यः स शत्रुभिः ।
एवमुक्त्वा गताः सर्वे ऋषयस्ते यथागतम् ॥१०॥
राघवश्च तमेवार्थं चिन्तयामास विस्मितः ।
हनूमान् प्रवणो भूत्वा राघवं वाक्यमब्रवीत् ॥११॥
स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा ।
भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु ॥१२॥
यावद्रामकथा वीर चरिष्यति महीतले ।
तावच्छरीरे वत्स्यन्ति प्राणा मम न संशयः ॥१३॥
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् ।
उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ॥१४॥
एवमेतत्कपिश्रेष्ठ भवता नात्र संशयः ।
तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः ॥१५॥
कथानां बहुरूपाणां हास्यकाराः समन्ततः ।
ततः कथायां कस्यांचित् राघवः समभाषत ॥१६॥
काः कथा नगरे भद्र वर्तन्ते विषयेषु च ।
मामाश्रितानि कान्याहुः पौरजानपदा जनाः ॥१७॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ।
स्थिताः कथा शुभा राजन् वर्तन्ते पुरवासिनाम् ॥१८॥

श्रृणु राजन् यथा पौराः कथयन्ति शुभाशुभम् ।
हत्वा च रावणं संख्ये सीतामाहृत्य राघवः ।।१९।।
अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ।
रक्षसां वशमापन्नां कथं रामो न कुत्सते ।।२०।।
एवं बहुविधा वाचो वदन्ति पुरवासिनः ।
विसृज्य तु सुहृद्वर्गं बुद्ध्यानिश्चित्य राघवः ।।२१।।
समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ।
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् ।।२२।।
भरतं च महाभागं शत्रुघ्नमपराजितम् ।
कुमारानागताञ्श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ।।२३।।
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् ।
प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ।।२४।।
आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्रतेजसः ।
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ।।२५।।
आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह ।
सर्वे श्रृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा ।।२६।।
पौराणां मम सीतायां यादृशी वर्तते कथा ।
पौरापवादः सुमहांस्तथा जनपदस्य च ।।२७।।
रावणेन हृता सीता स च विध्वंसितो मया ।
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा ।।२८।।

प्रत्यक्षं तत्र सौमित्रे देवानां हव्यवाहनः ।
अपापां मैथिलीमाह वायुश्चाकाशगोचरः ॥२९॥

लंकाद्वीपे महेन्द्रेण मम हस्ते निवेशिता ।
अयं तु मे महान् वादः शोकश्च हृदि वर्तते ॥३०॥

श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥३१॥

गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ।
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ॥३२॥

विसृज्य तत्रैनां विजने देशे रघुनन्दन ।
शीघ्रमागच्छ सौमित्रे कुरुष्व वचनं मम ॥३३॥

एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहिताननः ।
प्रविवेश स धर्मात्मा भ्रातृभिः परिवारितः॥३४॥

[ रथे सीतामारोप्य लक्ष्मणस्य अयोध्यातो बहिर्गमनं गङ्गामुत्तीर्य तमसातटमासाद्य रामसन्देशकथनञ्च ]

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः ।
सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥३५॥

सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् ।
मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥३६॥

सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः ।
रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥३७॥

आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् ।
रथोऽयं समनुप्राप्तो यत्कार्यं क्रियतां प्रभो ॥३८॥

एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः ।
प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥३९॥

त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः ।
नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥४०॥

एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ।
प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत् ॥४१॥

सा तु सूतस्य वचनादारुरोह रथोत्तमम् ।
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ॥४२॥

आससाद विशालाक्षी गङ्गां पापविनाशिनीम् ।
अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः ॥४३॥

आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ।
सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः ॥४४॥

उवाच शोकसंतप्तः प्रयाहीति च नाविकम् ।
ततस्तीरमुपागम्य भागीरथ्याः सलक्ष्मणः ॥४५॥

उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंप्लुतः ।
श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ॥४६॥

पुरे जनपदे चैव त्वत्कृते जनकात्मजे ।
रामः संतप्तहृदयो मां निवेद्य गृहं गतः ॥४७॥

सा त्वं त्यक्ता नृपतिना निर्दोषा मम संनिधौ ।
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ।।४८।।

[ सीतां परित्यज्य लक्ष्मणस्य निवर्तन, सीताया विलपनं वाल्मीकेश्च तत्रागमनं तेन सह सीताया अपि तदाश्रमगमनञ्च ]

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ।।४९।।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ।
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।।५०।।
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ।।५१।।
यथाज्ञं कुरु सौमित्रे त्यज मां दुःखभागिनीम् ।
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।।५२।।
शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ।
वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ।।५३।।
जानासि च यथा शुद्धा सीता तत्त्वेन राघव ।
भक्त्या च परया युक्ता हिता च तव नित्यशः ।।५४।।
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ।
परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ।।५५।।
एवं ब्रुवत्यां सीतायां लक्ष्मणो दीनचेतनः ।
प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ।।५६।।

आरुह्य च पुनर्नावं नाविकं चाभ्यचोदयत् ।
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ।।५७।।
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ।
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः ।।५८।।
अयोध्यां रत्नसम्पूर्णां हृष्टपुष्टजनावृताम् ।
सीतां रुदन्तीं दृष्ट्वा तां तत्र वै मुनिदारकाः ।।५९।।
प्राद्रवन् यत्र भगवानास्ते वाल्मीकिरुग्रधीः ।
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये ।।६०।।
सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ।
तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ।।६१।।
तपसा लब्धचक्षुष्मान् प्राद्रवद्यत्र मैथिली ।
ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ।।६२।।
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ।
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ।।६३।।
जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ।
अपापां वेद्मि सीते त्वां तपोलब्धेन चक्षुषा ।।६४।।
विस्रब्धा भव वैदेहि सांप्रतं मयि वर्तसे ।
श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् ।।६५।।
शिरसा वन्द्य चरणौ तथेत्याह कृताञ्जलिः ।
तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ।।६६।।

× × ×

सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः ।
राज्ञस्तु भवनद्वारि सोऽवतीर्य रथोत्तमात् ।।६७।।

अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ।
स दृष्ट्वा राघवं दीनमासीनं परमासने ।।६८।।

जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः ।
उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ।।६९।।

आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् ।
गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुचौ ।।७०।।

पुनरप्यागतो वीर पादमूलमुपासितुम् ।
ततः प्रभाते विमले कृतपौर्वाह्णिकक्रियः ।।७१।।

अभिचक्राम काकुत्स्थो दर्शनं पौरकार्यवित् ।
राज्ञस्त्वाज्ञां पुरस्कृत्य द्वाःस्थो मूर्ध्नि कृताञ्जलिः।।७२।।

[ रामान्तिकमागत्य तापसानां लवणात्याचारनिवेदनं तद्वधाय रामेण शत्रुघ्नस्य प्रेषणञ्च ]

प्रवेशयामास तदा तापसान् सुदुरादसान् ।
प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ।।७३।।

किमागमनकार्यं वः किं करोमि समाहितः ।
तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् ।।७४।।

पूर्वं कृतयुगे राजन् दैतेयः सुमहाबलः ।
लोलपुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ।।७५।।

तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ।
विश्वावसोरपत्यं सा ह्यनलायां महाप्रभा ॥७६॥
तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः ।
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा ॥७७॥
संतापयति लोकांस्त्रीन् विशेषेण च तापसान् ।
श्रुत्वा प्रमाणं काकुत्स्थ त्वं हि नः परमा गतिः॥७८॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन् ।
घातयिष्यामि तद्रक्षो ह्यपगच्छतु वो भयम् ॥७९॥
प्रतिज्ञाय तथा तेषां मुनीनामुग्रतेजसाम् ।
स भ्रातृन् सहितान् सर्वानुवाच रघुनन्दनः ॥८०॥
को हन्ता लवणं वीरः कस्यांशः स विधीयताम् ।
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् ॥८१॥
कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनः ।
फलमूलाशनो भूत्वा जटी चीरधरस्तथा ॥८२॥
अनुभूयेदृशं दुःखमेष र ाघवनन्दनः ।
प्रेष्ये मयि स्थिते राजन्न भूयः क्लेशमाप्नुयात् ॥८३॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ।
एवं भवतु काकुत्स्थ क्रियतां मम शासनम् ॥८४॥
रामेण चाभ्यनुज्ञातः शत्रुघ्नः शत्रुतापनः ।
रामं प्रदक्षिणीकृत्य शिरसाभिप्रणम्य च ॥८५॥

लक्ष्मणं भरतं चैव प्रणिपत्य कृताञ्जलिः ।
प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः ॥८६॥
प्रस्थाप्य तु बलं सर्वं मासमात्रोषितः पथि ।
एक एवाशु शत्रुघ्नो जगाम त्वरितं तदा ॥८७॥
द्विरात्रमन्तरे शूर उष्य राघवनन्दनः ।
वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥८८॥

[ कुशलवयोर्जन्म शत्रुघ्नेन लवणस्य वधश्च ]

यामेव रात्रिं शत्रुघ्नः पर्णशालामुपाविशत् ।
तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् ॥८९॥
वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ।
यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः ॥९०॥
निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत् ।
यश्चापरो भवेत्ताभ्यां लवेन स समाहितः ॥९१॥
निर्मार्जनीयो वृद्धाभिर्लव इत्येव नामतः ।
अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत् प्रियम् ॥९२॥
प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम् ।
मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुखः पुनः ॥९३॥
स गत्वा यमुनातीरं सप्तरात्रोषितः पथि ।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥९४॥

ततोऽर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः ।
आगच्छद्बहुसाहस्त्रं प्राणिनां भारमुद्वहन् ॥९५॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारिधृतायुधम् ।
पाणौ पाणिं विनिष्पिष्य दन्तान् कटकटाय्य च॥९६॥
लवणो राघवशार्दूलमाह्वयामास चासकृत् ।
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ॥९७॥
आ कर्णात् स विकृष्याथ तद्धनुर्धन्विनां वरः ।
तं मुमोच महाबाणं लवणस्य महोरसि ॥९८॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ।
पपात सहसा भूमौ वज्राहत इवाचलः ॥९९॥
शत्रुघ्नोऽपि महातेजास्तां सेनां समुपानयत् ।
तां पुरीं दिव्यसङ्काशां नानापण्योपशोभिताम्॥१००॥
तां समृद्धां समृद्धार्थः शत्रुघ्नो भरतानुजः ।
निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥१०१॥

[ मृतपुत्रमादाय द्विजस्यागमनं, नारदस्याज्ञया दुष्कृतान्वेषणाय विमानमारुह्य रामस्य गमनं शम्बूकस्य वधश्च ]

ततः कतिपयाहस्सु वृद्धो जानपदो द्विजः ।
मृतं बालमुपादाय राजद्वारमुपागमत् ॥१०२॥
असकृत् पुत्र पुत्रेति वाक्यमेतदुवाच ह ।
रामस्य दुष्कृतं किंचिन्महदस्ति न संशयः ॥१०३॥

यथा हि विषयस्थानां बालानां मृत्युरागतः ।
तथा तु करुणं तस्य द्विजस्य परिवेदनम् ॥१०४॥
शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् ।
स दुःखेन च संतप्तो मन्त्रिणस्तानुपाह्वयत् ॥१०५॥
राघवः सर्वमाचष्टे द्विजोऽयमुपरोधते ।
तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ॥१०६॥
प्रत्युवाच शुभं वाक्यमृषीणां संनिधौ नृपम् ।
स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥१०७॥
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ।
भविष्यति नरश्रेष्ठ बालस्यास्य च जीवितम् ॥१०८॥
नारदस्य तु तद्वाक्यं श्रुत्वामृतमयं तदा ।
मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥१०९॥
इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः ।
आजगाम मुहूर्तेन समीपं राघवस्य वै ॥११०॥
अभिवाद्य महर्षींस्तान् विमानं सोऽध्यरोहत ।
दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दनः ॥१११॥
शैवलस्योत्तरे पार्श्वे ददर्श सुमहत् सरः ।
तस्मिन् सरसि तप्यन्तं तापसं सुमहत्तपः ॥११२॥
ददर्श राघवः श्रीमान् लम्बमानमधोमुखम् ।
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् ॥११३॥

उवाच स तदा वाक्यं धन्यस्त्वमसि सुव्रत ।
कस्यां योन्यां तपोवृद्ध वर्तसे दृढविक्रम ।।११४।।
तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मण: ।
अवाक्शिरास्तथा भूत्वा वाक्यमेतदुवाच ह ।।११५।।
शूद्रयोन्यां प्रसूतोऽस्मि शम्बूको नाम नामत: ।
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् ।।११६।।
निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघव: ।
प्रत्यूचू राघवं प्रीता देवा: प्रीतिसमन्वितम् ।।११७।।
निर्वृतो भव काकुत्स्थ सोऽस्मिन्नहनि बालक: ।
जीवितं प्राप्तवान् भूय: समेतश्चापि बन्धुभि:।।११८।।
ततोऽर्धदिवसे प्राप्ते पूज्यमानस्ततस्तत: ।
अयोध्यां प्राप्य काकुत्स्थो मध्यकक्ष्यामवारुहत्।।११९।।
ततो विसृज्य रुचिरं पुष्पकं कामगामि तत् ।
कक्ष्यान्तरविनिक्षिप्तं द्वा:स्थं रामोऽब्रवीद्वच: ।।१२०।।
लक्ष्मणं भरतं चैव गत्वा तौ लघुविक्रमौ ।
ममागमनमाख्याय शब्दापयत मा चिरम् ।।१२१।।
द्वा: स्थ: कुमारावाहूय राघवाय न्यवेदयत् ।
दृष्ट्वा तु राघव: प्राप्तौ प्रियौ भरतलक्ष्मणौ।।१२२।।

[ रामेण प्रारब्धे राजसूययज्ञे कुशलवाभ्यां रामायणोपगानं वाल्मीकिना सह सीतायाः आगमनं प्रत्ययदानञ्च ]

परिष्वज्य तदा रामो वाक्यमेतदुवाच ह ।
युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम् ॥१२३॥
सहितो यष्टुमिच्छामि तत्र धर्मो हि शाश्वतः ।
काञ्चनीं मम पत्नीं च दीक्षायां ज्ञांश्च कर्मणि॥१२४॥
अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ।
लक्ष्मणेनाभिगुप्ता च हयचर्या प्रवर्तत ॥१२५॥
वर्तमाने तथाभूते यज्ञे च परमाद्भुते ।
सशिष्य आजगामाशु वाल्मीकिर्मुनिपुंगवः ॥१२६॥
स शिष्यावब्रवीद्धृष्टो युवां गत्वा समाहितौ ।
कृत्स्नं रामायणं काव्यं गायेथां परया मुदा ॥१२७॥
संदिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ ।
तथैव करवावेति निर्जग्मतुररिंदमौ ॥१२८॥
तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ ।
यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥१२९॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्यविनिर्मिताम् ।
तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः ॥१३०॥
पप्रच्छ तौ महातेजास्तावुभौ मुनिदारकौ ।
कर्ता काव्यस्य महतः क्व चासौ मुनिपुंगवः ॥१३१॥

पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ।
वाल्मीकिर्भगवान् कर्ता संप्राप्तो यज्ञसंविधम्॥१३२॥
यदि बुद्धिः कृता राजञ्श्रवणाय महारथ ।
कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः ॥१३३॥
बाढमित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवम् ।
प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुंगवः ॥१३४॥
तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥१३५॥
दूताञ्शुद्धसमाचारानाहूयात्ममनीषया ।
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिकम् ॥१३६॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥१३७॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥१३८॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् ।
दूताः संप्रययुर्वाटं यत्रास्ते मुनिपुङ्गवः ॥१३९॥
ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ।
तेषां तद्व्याहृतं श्रुत्वा रामस्य च मनोगतम्॥१४०॥
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ।
एवं भवतु भद्रं वो यथा वदति राघवः ॥१४१॥

तथा करिष्यते सीता दैवतं हि पतिः स्त्रियाः ।
तथोक्ता मुनिना सर्वे रामदूता महौजसम् ॥१४२॥
प्रत्येत्य राघवं क्षिप्रं मुनिवाक्यं बभाषिरे ।
तस्यां रजन्यां व्युष्टायां यज्ञवाटगतो नृपः ॥१४३॥
सीताशपथवीक्षार्थं सर्वं एव समागताः ।
तदा समागतं सर्वमश्मभूतमिवाचलम् ॥१४४॥
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ।
सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥१४५॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ।
लोकापवादभीतस्य तव राम महाव्रत ॥१४६॥
प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ।
इमौ तु जानकीपुत्रावुभौ च यमजातकौ ॥१४७॥
सुतौ तवैव दुर्धर्षौ सत्यमेतद्ब्रवीमि ते ।
वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ॥१४८॥
लोकापवादो बलवान् येन त्यक्ता हि मैथिली ।
शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥१४९॥

[ सीतायाः धरण्यां प्रवेशः, बहुशो विलप्य रामस्य कुशलवाभ्यां सह अयोध्यां प्रवेशश्च ]

अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः ।
पितामहं पुरस्कृत्य सर्वं एव समागताः ॥१५०॥

सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥१५१॥

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥१५२॥

मनसा कर्मणा वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥१५३॥

यथैतत्सत्यमुक्तं मे वेद्मि रामात् परं न च ।
तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् ॥१५४॥

भूतलादुत्थितं दिव्यं सिंहासनमुत्तमम् ।
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ॥१५५॥

तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥१५६॥

तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत्॥१५७॥

तन्मुहूर्तमिवात्यर्थं समं संमोहितं जगत् ।
अवाक्शिरा दीनमना रामो ह्यासीत् सुदुःखितः॥१५८॥

क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ।
वसुधे देवि भवति सीता निर्यातयतां मम ॥१५९॥

दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ।
एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते ॥१६०॥

ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ।
राम राम न संतापं कतुमर्हसि सुव्रत ॥१६१॥

इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम् ।
सीता हि विमला साध्वी तव पूर्वपरायणा ॥१६२॥

स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः ।
एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः ॥१६३॥

जगाम त्रिदेवं देवो देवैः सह सबान्धवैः ।
भविष्यदुत्तरं यन्मे श्वोभूते संप्रवर्तताम् ॥१६४॥

एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ।
तं जनौघं विसृज्याथ पर्णशालामुपागमत् ॥१६५॥

जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ।
एवं समाप्य यज्ञं तु विधिवत् स तु राघवः ॥१६६॥

हृदि कृत्वा तदा सीतामयोध्यां प्रविवेश ह ।
इष्टयज्ञो नरपतिः पुत्रद्वयसमन्वितः ॥१६७॥

न सीतायाः परां भार्यां वव्रे स रघुनन्दनः ।
यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनीभवत् ॥१६८॥

अथ दीर्घस्य कालस्य राममाता यशस्विनी ।
पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥१६९॥

[ गार्ग्यात् युधाजित्संदेशमाकर्ण्य रामेण भरतस्य प्रेषणं गन्धर्वान्निहत्य गन्धर्वदेशञ्च विजित्य आत्मजौ तत्र निवेश्य भरतस्य निवर्तनञ्च ]

अन्वियाय सुमित्रा च कैकेयी च यशस्विनी ।
कस्यचित्त्वथ कालस्य युधाजित् केकयो नृपः ॥१७०॥

स्वगुरुं प्रेषयामास राघवाय महात्मने ।
गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् ॥१७१॥

प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः ।
गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥१७२॥

उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे ।
किमाह मातुलो वाक्यं यदर्थं भगवानिह ॥१७३॥

प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः ।
रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरम् ॥१७४॥

वक्तुमद्भुतसंकाशं राघवायोपचक्रमे ।
मातुलस्ते महाबाहो वाक्यमाह नरर्षभ ॥१७५॥

अयं गन्धर्वविषयः फलमूलोपशोभितः ।
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः ॥१७६॥

तं च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ।
तान् विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् ॥१७७॥

निवेशय महाबाहो स्वपुरे सुसमाहिते ।
तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च ॥१७८॥

उवाच बाढमित्येव भरतं चान्ववैक्षत ।
सोऽब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् ।।१७९।।
भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ ।
निहत्य गन्धर्वसुतान् द्वे पुरे विभजिष्यतः ।।१८०।।
निवेश्य ते पुरवरे आत्मजौ संनिवेश्य च ।
आगमिष्यति मे भूयः सकाशमतिधार्मिकः ।।१८१।।
भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ ।
सा सेना शक्रयुक्तेव नगरान्निर्ययावथ ।।१८२।।
अध्यर्धमासमुषिता पथि सेना निरामया ।
हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ।।१८३।।
भरतश्च युधाजिच्च समेतौ लघुविक्रमैः ।
गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ।।१८४।।
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः ।
योद्धुकामा महावीर्या व्यनदन् वै समन्ततः ।।१८५।।
ततः समभवद्युद्धं तुमुलं रोमहर्षणम् ।
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् ।।१८६।।
संवंतं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ।
क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मनाम्।।१८७।।
हतेषु तेषु सर्वेषु भरतः कैकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ।।१८८।।

तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते ।
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ॥१८९॥
पुनरायान्महाबाहुरयोध्यां कैकयीसुतः ।
तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह ॥१९०॥
वाक्यं चाद्भुतसंकाशं तदा प्रोवाच लक्ष्मणम् ।
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ ॥१९१॥
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् ।
तथोक्तवति रामे तु भरतः प्रत्युवाच ह ॥१९२॥
अयं कारुपथो देशो रमणीयो निरामयः ।
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः ॥१९३॥
चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ।
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः ॥१९४॥
अभिषिच्य कुमारौ स प्रस्थापयति राघवः ।
अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगामह ॥१९५॥
चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ।
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः ॥१९६॥
पुत्रे स्थिते दुराधर्षे ह्ययोध्यां पुनरागमत् ।
भरतोऽपि तथैवोष्य संवत्सरमतोऽधिकम् ॥१९७॥
अयोध्यां पुनरागम्य रामपादावुपास्त सः ।
कस्यचित्त्वथ कालस्य रामे धर्मपथे स्थिते ॥१९८॥

[ पितामहसन्देशमादाय मुनेरागमनं तेन सह रामस्य वार्तालापः, रामेण दुर्वाससे भोजनदानं, लक्ष्मणस्य सरयूतटे गमनं, सशरीरं तमादाय इन्द्रस्य स्वर्गे गमनञ्च ]

चोदितो राजसिंहेन मुनिर्वाक्यमभाषत ।
द्वन्द्वमेतत् प्रवक्तव्यं हितं वै यद्यपेक्षसे ॥१९९॥
यः शृणोति निरीक्षेद्वा स वध्यो भविता तव ।
स तथेति प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ॥२००॥
द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ।
स मे वध्यः खलु भवेत् कथां द्वन्द्वं समीरिताम् ॥२०१॥
ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ।
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम्॥२०२॥
तमुवाच मुने वाक्यं कथयस्वेति राघवः ।
शृणु राजन् महासत्त्व यदर्थमहमागतः ॥२०३॥
पितामहेन देवेन प्रेषितोऽस्मि महाबल ।
पितामहश्च भगवानाह लोकपतिः प्रभुः ॥२०४॥
समयस्ते कृतः सौम्य स्वाँल्लोकान् परिरक्षितुम् ।
कालोऽयं ते नरश्रेष्ठ समीपमुपवर्तितुम् ॥२०५॥
तथा तयोः संवदतोर्दुर्वासा भगवानृषिः ।
रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥२०६॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः ।
रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते ॥२०७॥

तच्छ्रुत्वा घोरसंकाशं वाक्यं तस्य महात्मनः ।
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम्।।२०८।।

इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ।
लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च ।।२०९।।

निःसृत्य त्वरितं राजा अत्रेः पुत्रं ददर्श ह ।
किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत।।२१०।।

प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल ।
अद्य वर्षसहस्रस्य समाप्तिस्तपसो मम ।।२११।।

सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ।
तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः ।।२१२।।

भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ।
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् ।।२१३।।

साधु रामेति संभाष्य स्वमाश्रममुपागमत् ।
राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ।।२१४।।

न संतापं महाबाहो मदर्थं कर्तुमर्हसि ।
जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय ।।२१५।।

लक्ष्मणस्त्वरितं प्रायात् स्वगृहं न विवेश ह ।
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः ।।२१६।।

निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह ।
अदृश्यं सर्वमनुजैः सशरीरं महाबलम् ।।२१७।।

[ भरतस्य प्रस्तावेन कुशलवयोः राज्ये अभिषेकः, रामेण शत्रुघ्नाय दूतप्रेषणं, पुत्रद्वयमभिषिच्य शत्रुघ्नस्यागमनम् ]

प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेशह ।
विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः ।।२१८।।
पुरोधसं मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ।
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् ।।२१९।।
अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ।
भरतश्च विसंज्ञोऽभूच्छ्रुत्वा रामस्य भाषितम्।।२२०।।
राज्यं विगर्हयामास राघवं चेदमब्रवीत् ।
सत्येनाहं शपे राजन् स्वर्गलोकेन चैव हि ।।२२१।।
न कामये यथा राज्यं त्वां बिना रघुनन्दन ।
इमौ कुशलवौ राजन्नभिषिञ्च नराधिप ।।२२२।।
शत्रुघ्नस्य तु गच्छन्तु दूतास्त्वरितविक्रमाः ।
इदं गमनमस्माकं स्वर्गायाख्यान्तु मा चिरम् ।।२२३।।
ततः सर्वाः प्रकृतयो रामं वचनमब्रुवन् ।
गच्छन्तमनुगच्छामो यत्र राम गमिष्यसि ।।२२४।।
पौराणां दृढभक्तिं च बाढमित्येव सोऽब्रवीत् ।
अभिषिच्य सुतौ वीरौ प्रतिष्ठाप्य पुरे तदा ।।२२५।।
दूतान् संप्रेषयामास शत्रुघ्नाय महात्मने ।
ते दूता रामवाक्येन चोदिता लघुविक्रमाः ।।२२६।।

प्रजग्मुर्मधुरां शीघ्रं चक्रुर्वासं च नाध्वनि ।
शत्रुघ्नाय यथातत्त्वमाचख्युः सर्वमेव तत् ।।२२७।।
तच्छ्रुत्वा घोरसंकाशं कुलक्षयमुपस्थितम् ।
ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्नराधिपः ।।२२८।।
सुबाहुं मधुरायां च वैदिशे शत्रुघातिनम् ।
ययौ स्थाप्य तदायोध्यां रथेनैकेन राघवः ।।२२९।।
सोऽभिवाद्यं ततो रामं प्राञ्जलिः प्रयतेन्द्रियः ।
उवाच वाक्यं धर्मज्ञं धर्ममेवानुचिन्तयन् ।।२३०।।
तवानुगमने राजन् विद्धि मां कृतनिश्चयम् ।
बाढमित्येव शत्रुघ्नं रामो वाक्यमुवाच ह ।।२३१।।

[ रामस्य महाप्रस्थानं, पितामहवचनेन अनुजैः सह तस्य वैष्णवे तेजसि प्रवेशश्च ]

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ।।२३२।।
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सह द्विजैः ।
ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः ।।२३३।।
चकार विधिवद्धर्मं माहाप्रास्थानिकं विधिम् ।
ततः सूक्ष्माम्बरधरो ब्रह्मावर्तयन् परम् ।।२३४।।
कुशान् गृहीत्वा पाणिभ्यां प्रसज्य प्रययावथ ।
रामस्य दक्षिणे पार्श्वे सपद्मा श्रीरुपाश्रिता ।।२३५।।

सव्ये तु ह्रीर्महादेवी व्यवसायस्तथाग्रतः ।
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ॥२३६॥
ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः ।
गच्छन्तमन्वगच्छंस्तं राघवं गुणरञ्जिताः ॥२३७॥
अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् ।
सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥२३८॥
अथ तस्मिन् मुहूर्ते तु ब्रह्मा लोकपितामहः ।
ाययौ यत्रकाकुत्स्थः स्वर्गाय समुपस्थितः ॥२३९॥
सरयूसलिले रामः पद्भ्यां समुपचक्रमे ।
ततः पितामहो वाणीमन्तरिक्षादभाषत ॥२४०॥
आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोसि राघव ।
भ्रातृभिः सह देवाभैः प्रविशस्व स्वकां तनुम्॥२४१॥
पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ।
विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥२४२॥
अथ विष्णुर्महातेजाः पितामहमुवाचह ।
एषां लोकं जनौघानां दातुमर्हसि सुव्रत ॥२४३॥
इमे हि सर्वे स्नेहान्मामनुयाता मनस्विनः ।
तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः ॥२४४॥
लोकान् सान्तानिकान्नाम यास्यन्तीमे समागता ।
तथोक्तवति देवेश गोप्रतारमुपागताः ॥२४५॥

भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः ।
अवगाह्य जलं यो यः प्राणी ह्यासीत् प्रहृष्टवत्।।२४६।।
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ।
ततः समागतान् सर्वान् स्थाप्य लोकगुर्ुदिवि।।२४७।।
जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत् ।

× × ×

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम् ।
रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम्।।२४८।।
रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ।
प्रीयते सततं रामः स हि विष्णुः सनातनः ।।२४९।।

आयुष्यमारोग्यकरं यशस्यं
सौभ्रातृकं बुद्धिकरं शुभं च ।
श्रोतव्यमेतन्नियमेन सद्भि-
राख्यानमोजस्करमृद्धिकामैः ।।२५०।।

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ।।२५१।।

---

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ।।

---

।। शुभमस्तु ।।

# टिप्पणी

## बालकाण्ड

श्लोकसंख्या

१ **स्वाध्याय**=वेदाध्ययन। **निरत**=तत्पर। **वाग्विदाम्**=वाणी के गुण तथा भाव को जानने वाले, **मुनिपुंगवम्**=समासान्त 'पुंगव' शब्द विशिष्टतासूचक होता है। देखिये :—

स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥

नामलिङ्गानुशासन ३।१।५९

२ **नु**=कदाचित्।

४ **आत्मवान्**=अपने मन को वश में कर लेने वाला। कस्येति सम्बन्धसामान्ये षष्ठी।

६ **आमन्त्र्य**=निवेदित करके, वाल्मीकि को सावधान करने के लिए।

१० **निष्ठित**=प्रवीण।

११ **क्षमा**=पृथिवी।

१२ **विशारद**=निपुण।

१५ **अभ्याश**=सामीप्य।

२० **मा अगमः**=पुराना रूप है, अतः क्रियापद के आदि 'अ' का लोप नहीं किया गया है।

२१ **अभिषेक**=किसी धार्मिक कार्य के पूर्व शरीर को पवित्र करना।

२४ **ऋषिसत्तम**=अतिशयेन सन् सत्तमः। ऋषिश्रेष्ठ।

श्लोकसंख्या

२१ **परिनिष्ठित**=पूर्णरूपेण प्रवीण। **उपब्रह्मण**=परिशिष्ट। इतिहास और पुराण वेदों की विषय-सूची के परिशिष्ट माने जाते हैं। देखिये :—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।

महाभारत १।१।२६७

यह अंश इस बात का प्रमाण है कि वाल्मीकि इस महाकाव्य को वेद का एक उपब्रह्मण बनाना चाहते थे।

३२ **वाचोविधेयम्**=कण्ठस्थ, जो पुस्तक की सहायता के बिना पुनः उपस्थित हो सके।

३५ **स्फीत**=सौभाग्यशाली, समृद्ध। **जनपद**=देश। **निविष्ट**=स्थित।

३६ **महाराष्ट्रविवर्धनः**=महतो राष्ट्रस्य विवर्धनः।

३७ **पुरीमावासयामास**=देखिये :—उपान्वध्याङ्वसः। अष्टाध्यायी (१/४/४८)

३९ **अनृतकः**='अनृत' शब्द की रचना पाणिनि के 'अर्श आदिभ्यो च' (५/२/१२७) सूत्र से होती है, अनृत एव अनृतकः। इसी प्रकार 'असूयक' की भी रचना होती है।

४० **इक्ष्वाकु**=इक्ष्वाकु की सन्तान, सूर्य-वंश का पहला राजा। **मन्त्र**=सलाह, रहस्यमय योजना। **इङ्गित**=भावों को अभिव्यक्त करने के लिये शरीर के अगों की गति।

४२ **तप्यमानस्य**=कष्ट सहते हुए या तपस्या करते हुए। **चिन्तयान**='चिन्त्यमान' का पुराना रूप।

४६ **श्लक्ष्णम्**=मधुर। **लालप्यमानस्य**=बार-बार रोते हुए।

४७ **प्रत्यपूजयन्**=प्रशंसा की।

४८ **आरभन्**='आरभन्त' का पुराना रूप।

श्लोकसंख्या

५० **प्राक्रमत्**='प्राक्रमत' का पुराना रूप ।

५२ **पात्री**='पत्नी' के सम्बन्ध होने के कारण स्त्रीलिङ्ग ।

५५ **ताम्**=पात्री के साथ सम्बद्ध है ।

५६ **प्रख्या**—आकृति, रूप । **संवर्तयित्वा**=समाप्त करके ।

६२ **नक्षत्रेऽदितिदैवत्ये**=पुनर्वसु नक्षत्र ।

स्वोच्चसंस्थेषु पञ्चसु ग्रहेषु—रामायण के समालोचकों का मत है कि पाँच ग्रह—सूर्य, मंगल, शनि, बृहस्पति और शुक्र अपने स्थान पर सर्वोच्च थे। **कर्कटे लग्ने**=कर्क राशि। **वाक्पति**=गुरु अर्थात् बृहस्पति ।

६३ **प्रोद्यमान**=प्रकट होते हुए, जब वह लक्षण प्रकट हो रहा था।

६४ **मीनलग्ने**=मीनलग्न में ( मत्स्यवर्ग का चिह्न ) ।

६५ **सार्प**=अश्लेषा नक्षत्र । **कुलीर**=केकड़े का चिह्न । **सूत**= एक पौराणिक, पुराणों के एक व्याख्याता । **मागध**= वंशावली के सहित राजाओं की प्रशंसा में गीत गाने वाले वन्दीजन । **बन्दिन्**=राजा का प्रशसंक राजदूत ।

६६ महाकाव्य में 'अतीत्यैकादशाहम्' आदि **शब्द** आये हैं। समीक्षकों का मत है कि ये शब्द राम के जन्म की भ्रष्टता की ओर संकेत करते हैं, अन्यथा 'क्षत्रियस्य द्वादशाहं सूतकम्'--स्मृति के इस अंश का अर्थ यह है कि बच्चों का नामकरण तेरहवें दिन होता था। विशेष व्याख्या के लिए कुलकभट्टकृत मनुस्मृति ( अध्याय २, श्लोक ३० ) टीका देखिए ।

६९ **लक्ष्मिवर्धनः**='लक्ष्मीवर्धन' का पुराना रूप ।

७६ **संशितव्रतम्**=तीक्ष्णनियमम् । **उपहारयत्**=क्या इसने किसी मनुष्य द्वारा समर्पित किया, कदाचित् वे वशिष्ठ थे ।

श्लोकसंख्या

८२ **कृतश्रमः**=व्यर्थ प्रयास किया। **चर्या**=किया हुआ काम।

८३ **काकपक्षधरम्**=बालमन्दिरों के ऊपर बालों की तिरछी या घुँघराली लटें, या जुल्फें।

८४ **विकर्तारः**=परिवर्तन करने वाले अर्थात् प्रतिबन्धक।

८६ **कुशिकपुत्राय**=कुशिक के पुत्र विश्वामित्र।

६७ **घोरसंकाश**=देखने में भयानक।

१०१ **अक्लीबम्**=साहसी।

१०४ **विक्रान्ता**=शक्तिशाली।

१०५ **उष्य**='उषित्वा' का पुराना रूप।

१०६ **गच्छन्**='राम' की ओर निर्देश करता है।

११२ **वामनस्य**=विष्णु के एक अवतार वामन की ओर संकेत है।

११३ **गच्छामहे**='गच्छामः' का पुराना रूप है।

११४ **गृह्य**='गृहीत्वा' का पुराना रूप है।

११८ **भीमसंकाश**=श्लोकसंख्या ६७ की टिप्पणी के अन्तर्गत देखिए।

१२२ **निरीतिका**=सकटमुक्त अर्थात् सुखी।

१३० **प्रागुत्तर**=सुदूरोत्तर। **यज्ञवाट**=यज्ञ का घेरा।

१३६ **अयोनिजाम्**=जो माता के गर्भ से नहीं उत्पन्न हुई, वह जोती हुई वसुन्धरा से उत्पन्न हुई थी।

१४४ **वीर्यशुल्कायाः**=वीरता के रूप में मूल्य चुकाया गया, वीरता द्वारा विजित (क्रीत)।

१५८ **उर्मिला**=जनक की पुत्री।

१६० **भ्राता यवीयान्**=यहाँ जनक की ओर संकेत करने वाला 'अस्य' बोधनीय है।

१६८ **उद्यताम्**=विवाह करने के लिए तैयार।

श्लोकसंख्या

१६० **माण्डवी और श्रुतकीर्ति**=जनक के भाई कुशध्वज की पुत्रियाँ।

## अयोध्याकाण्ड

२ **उद्धहर्षणम्**=अतिशय हर्ष प्रकट करने वाला।

११ **पुष्ययोगेन**=उस समय, जब पुष्य नक्षत्र के साथ चन्द्रमा का योग होता है।

१३ **शोभयितुं चक्रे**—शोभयितुं बुद्धिं चक्रे इत्यर्थः।

१४ **ज्ञातिदासी**=कैकेयी-वंश की एक दासी। **यतो जाता**—कहीं पैदा हुई, जिसकी पितृश्रेणी का पता नहीं, जिसके माता-पिता जानने योग्य नहीं हैं अथवा उनका पता ही नहीं है। **चन्द्रसंकाश**=श्वेतानुलिप्त होने के कारण चन्द्रमा के समान दृष्टिगोचर होने वाला।

१८ **अवरोहत**=‘अवारोहत्’ का पुराना रूप।

२१ **वैरं यातयेत्**=प्रतिक्रिया होगी, बदला।

२३ **सोऽर्थो मा त्वामतिक्रमेत्**=कहीं यह विषय तुम्हारा अतिक्रमण न कर जाय, यह तुमसे शीघ्र ही प्रभावित हो सकता है। **अतिक्रमेत्**=‘अतिक्रमत’ का पुराना रूप। **व्यवस्याप्य**=वरदानों को स्वीकार करने के लिए राजा को प्रतिज्ञा कराकर।

२५ **विदर्शिता**=मार्गभ्रष्ट।

३० **अभियुक्त**=निन्दित।

३१ **व्यपनयिष्यामि**=‘व्यपनेष्यामि’ का पुराना रूप।

३८ **ततः प्रभातां रजनीम्**=रजनीं प्रभातां दृष्ट्वा इत्यर्थः।

४४ **सागरह्रदसंकाशात्**=यहाँ ‘संकाश’ शब्द का प्रयोग ‘समान’ के अर्थ में हुआ है।

श्लोकसंख्या

६९ **मृद्नती**=चरणों से दबती हुई या चूर्ण करती हुई, इस प्रकार राम के लिए मार्ग को कोमल बनाती हुई।

७२ **अनुगच्छस्व**='अनुगच्छ' का पराना रूप है।

८० **उपसंगृह्य**=उनके चरणों में झुककर।

८४ **धृष्टम्**=साहसपूर्वक, निर्भीकतापूर्वक। **संमतान्**=समस्त अनुकूल लक्षणों के सहित।

८५ **त्रिपथगा**=तीन स्थान—आकाश ( स्वर्ग ), पृथ्वी तथा अधोलोक में बहने वाली गङ्गा नदी का एक नाम।

९१ **कलाप**=तूणीर ( तरकस )। **संनह्य**=सुदृढ़ करके।

९२ **उत्तम**=स्पर्शमात्र से समस्त दुःखों को दूर करने की अपनी योग्यता, अच्छा।

१०४ **व्यावहारिकाः**=व्यवहारे नियुक्ताः=राज्यप्रबन्धक।

१०५ **आदिष्टाः**=वसिष्ठादिभिरित्यर्थः कर्मणि। दुःस्वपरिपालनादीनि।

१०८ **आत्ययिकम्**=आवश्यक, अविलम्ब।

११६ **स्ववृत्ति**=अपने सत्य वचन का व्यवहार।

११८ **परिद्यूनः**=शोकाकुल। **पञ्चत्वम्**=मृत्यु।

१२२ **संयानम्**=मृत शरीर को पूर्ण करते हुए।

१२३ **धरणीं गतः**=वसिष्ठ के चरणों में धरती पर गिर पड़ा।

१२४ **कल्यम्**=बहुत सवेरा या तड़का।

१२७ **संमर्दो**=भीड़, जन-समूह।

१३१ **प्रस्विन्न**=पसीने से तर-बतर।

१३९ **प्रगृह्य**=दुःख को बलात् रोककर।

१४४ **विक्रीतम्**=बेचा गया हुआ। **आहितम्**=न्यस्त, रखी गई हुई या जमा की गई हुई धरोहर। **क्रीतम्**=खरीदी गई हुई। **लोपयितुम्**=भङ्ग करने के लिये, विलुप्त करने के हेतु।

श्लोकसंख्या

१४५ उपधिः=असत्पूर्ण छल ।

१४७ त्रस्तगात्र:=उद्विग्न शरीर वाला । सज्जमान=उद्यत, तैयार ।

## अरण्यकाण्ड

१ पश्यमानौ='पश्यन्तौ' का पुराना रूप । प्रस्थ=पर्वत शिखा की ऊँची भूमि ।

३ भावितात्मनः=पवित्रात्मा ।

१७ निर्णत=जिसका चित्त खिन्न नहीं है वह व्यक्ति अर्थात् प्रसन्नचित्त ।

२४ अन्तकसमा त्वं गता=अत्रागतेत्यर्थः ।

४८ छत्रियपांसन=अपमानकारक क्षत्रिय ।

५८ छद्मना हृतचेतना=जिसकी चेतनाशक्ति मायाभिभूत थी ।

६२ त्र्यवनत=मध्यभाग में तीन स्थानों में झुकी हुई ।

७० पृषतम्=कुरंग ।

८४ अभ्यगच्छत='अभ्यगच्छत्' का पुराना रूप । रहित=व्यक्तिगत, गुप्त रूप से ।

८९ वैमात्र=विमाता (दूसरी माता) से उत्पन्न ।

९५ पादपान् काञ्चनान्=स्वर्णिम वृक्षों का दृश्य सिद्ध-पुरुष की भावी मृत्यु का लक्षण है ।

९९ विचेष्टमाना=अपने को मुक्त करने के लिए छटपटाती हुई या विभिन्न प्रकार की चेष्टाएँ करती हुई ।

१०३ अतुलवीर्ययोः=अनुपम शक्तिशालियों के मध्य ।

१०४ व्यायच्छद्यमानस्य=प्रयास करते हुए ।

१११ आवसथ=आवास-स्थान ।

११९ दिधक्षामि=भस्मीभूत होना चाहता हूँ ।

१२१ गम्य='गत्वा' का पुराना रूप ।

श्लोकसंख्या

## किष्किन्धाकाण्ड

१ **शाखामृग**=वानर। **अधिप**=यहाँ यह सुग्रीव के लिए प्रयुक्त है। **वितत्रसे**=काँप गया। **नैव विचेष्ट**=कोई भी चेष्टा नहीं की।

६ **शठबुद्धितया**=अनुभव के कारण वह दृढ़ विश्वास कम हो रहा है।

९ **विनिकृतः**=दुर्व्यवहृत और इसका अर्थ होगा देश-निष्कासित।

१९ **मर्यादा**=सीमा, यहाँ इसका अर्थ है – मित्रता की शर्तों से रहने का निर्णय।

२७ **भ्रातृगन्धिनम्**=दर्शनमात्र का भाई।

२८ **व्यतिष्ठन्**='व्यतिष्ठन्त' का पुराना रूप।

३१ **गाढसंवीत**=दृढ़तापूर्वक घिरा हुआ।

४७ **गतविद्युद्बलाहकः**=विद्युत् और मेघों से रहित।

४९ **संचोदयित्वा**='संचोदय्य' का पुराना रूप।

५२ **अञ्जसा**=शीघ्रतापूर्वक।

५९ **विजृम्भस्व**=बढ़ो (विकसित हो) उन्नत करो।

## सुन्दरकाण्ड

३ **रुरोध**=रोका, वश में किया।

५ **अनाधृष्य**=अनाक्रमणीय।

८ **अपश्यत**='अपश्यत्' का पुराना रूप।

१३ **मलिनसंवीत**=मलिन वस्त्रों से ढका हुआ।

१९ **न्यदर्शयत**=दिखाया, स्वाभिप्रायमित्यर्थः।

२२ **तृणमन्तरतःकृत्वा**=अपने और रावण के बीच एक तृण रखकर क्योंकि उनके लिये आत्मीयजन के अतिरिक्त किसी अन्य व्यक्ति से संलाप करना उचित नहीं था।

श्लोकसंख्या

२६ अलभन्ते=तुमको मारने के लिये पकड़ते हैं।

२७ संश्रवे=जिस स्थान से वह सीता के लिए कर्णगोचर (सुनाई देने के योग्य) थे।

४५ वन्द्य='वन्दित्वा' का पुराना रूप।

५६ प्रमृष्टम्=नष्ट-भ्रष्ट।

६१ परिघम्=द्वार (फाटक) बन्द करने की लौह अर्गला।

६३ संवृत्ताकारः=अपने (भय की) भावों को छिपाते हुए।

७१ शणवल्कैः=पटुआ और पेड़ की छाल।

७४ अव्यग्रः=स्थिर विचारशील।

७५ भ्रातुः=भाई का, सुग्रीव का व्यवहार रावण के भाई के रूप में हो सका।

८५ दौत्यम्=दूत या संदेशवाहक का कार्य। नानुमेने=दूत का वध करने के विषय में एकमत नहीं हुए।

९० वेष्टयन्ति=चारों ओर लपेट दिया, कार्पासक=कपास का बना हुआ।

९१ चारयामास=चारों ओर घूमा, स्वार्थे णिच्।

९३ कालायस=लौह, लौहसार (फौलाद, इस्पात)।

९७ निर्वापयामास=बुझाया।

९८ अरिष्ट=पर्वत का नाम।

## युद्धकाण्ड

२ वाहिनी=सेना।

६ स्वारण=सुरक्षिता। सुसमाहिता=सुव्यवस्थित।

८ धर्षिता=आक्रान्त (आक्रमण की गई हुई)।

श्लोकसंख्या

१३ अयशस्य=निन्दनीय । अमानुष्य=मानवेतर, अमानवीय । परदाराभिमर्शन=परपत्नी के साथ गुप्त साधनों का प्रयोग करना अर्थात् सम्भोगादि करना ।

१७ सपत्न=शत्रु । मित्रप्रवाद=मित्र रूप में निर्दिष्ट ।

२१ संकाश=सदृश ।

२८ परुषित=परुष व्यवहार किया गया हुआ ।

३० संस्कारसम्पन्न=शास्त्राध्ययन के प्रभाव से युक्त । श्लक्ष्ण=सुन्दर, चिकना । मधुरम्=स्वादिष्ट । लघु=हलका, शब्दों का अत्यन्त कम प्रयोग करते हुए ।

३३ संग्रहः=प्रवेश ( पहुँच ) ।

३५ अगर्हित=निष्कलङ्क ।

३६ अतिसृष्ट=अनुमोदित, स्वीकृत ।

५० अन्यूनाधिकम्=न तो कम और न तो अधिक ।

५४ विनिर्धूत=मुक्त ( छुटकारा पाया हुआ ) ।

५८ संनिभ=समान ।

६१ गदा=एक अस्त्रविशेष । शक्ति=बरछी या भाला । शूल=त्रिशूल । परश्वध=कुल्हाड़ी ( कुठार ) ।

६२ आहव=युद्ध ।

६५ अर्द्धचन्द्रम्=एक प्रकार का बाण जिसकी नोक अर्द्धचन्द्र के सदृश होती है ।

६६ संनिकाश=समान ।

६७ रात्रिचर=रजनीचर ।

६९ ब्रह्मशाप=रामायण-उत्तरकाण्ड के दशवें अध्याय की ओर संकेत है ।

७२ आदृत्य=सम्मान करके ।

श्लोकसंख्या

७६ रोषेण परिवृत्ताभ्यां नेत्राभ्याम् उपलक्षितं कुम्भकर्णमित्यर्थः।

८० परिकृन्तति=काटता है ।

८३ प्रमार्जामि=स्वच्छ करता हूँ, पूर्ण रूप से नष्ट करना ।

८४ अर्दयन्=चोट पहुँचाते हुए, पीड़ित करते हुए ।

८६ ब्रह्मदण्डान्तककालकल्पम्=ब्रह्मदण्ड, यम और शिव के समान ।

८७ अरिष्टम्=( शत्रुओं के लिए) दुर्गति लाने वाली । पुंख= तीर का पंखदार भाग ।

८८ चकर्त=काट डाला ।

८९ संख्य=युद्ध ।

९० रथर्षभ=रथस्थानां श्रेष्ठः ।

९२ खरश्रेष्ठैः समाधीयते युद्धमेभिरिति समाधयो धनुः खड्गादयः तैर्युक्तम्। अथवा खरश्रेष्ठैः समाधिना समाधानेन युक्तम् ।

९३ नालीक=एक प्रकार की बर्छी या भाला ।

९४ समितिंजय=युद्धप्रमुख ।

९९ अजिह्मग=सीधा जाने वाला, तीर ।

१०१ शिरस्त्राण=लोहे का टोप । प्रमथ्य=शक्तिपूर्वक ।

१०२ प्रतिभयम्=भयङ्कर ।

१०९ कदनम्=हत्या या वध ।

१११ भल्ल=फेंककर माराजाने वाला एक प्रकार का अस्त्र जिसकी नोक अर्द्धचन्द्राकार होती है ।

११४ प्रतोदः=कोचवान ।

११६ शिता=नोकदार ।

१२२ छन्द=इच्छा, सम्मति ।

१२४ रौद्रम्=भयानक । खेदम्=पीड़ा ।

श्लोकसंख्या

१२५ **गतानृण्यम्**=चुकाया गया हुआ ऋण ।

१२६ **अक्षय्य**=क्षीण न होने वाला ।

१३० **विजयिष्यसि**='विजेष्यसि' का पुराना रूप ।

१३२ **आयम्य**=फैला करके या तान करके ।

१३३ **क्षुर्**=तेज फल वाला बाण ।

१३४ **अच्छिन्दत्**='अच्छिनत्' का पुराना रूप ।

१४० **परमायत्तः**=अत्यधिक प्रयत्न करते हुए, **मर्मघातिनम्**= मर्म (शरीर के अन्दर का निर्बल स्थान) पर आघात करने वाला ।

१५५ **मृजा**= शुद्धि, सफाई ।

१५६ **प्रह्वः**=झुका हुआ, विनीत ।

१६१ **पूर्वक**=पहले का । **प्रत्यय**=विश्वास ।

१६५ **शिबिका**=डोली, पालकी । **परार्घ्य**=अतिमूल्यवान् ।

१६७ **अवलीयन्ती**=संकोचं गच्छन्ती, संकोच करती हुई ।

१७१ **युगपत्**=एक ही साथ ।

१७५ **गद्गद**=आगा-पीछा करना ।

१६६ **रूक्षम्**=कर्कश, निर्दय । **प्राकृत**=सामान्य पुरुष या स्त्री ।

१७८ **अपदेशेन**=सन्दर्भ, संज्ञा (नाम) देना, अपदेशेन जनकात्, जनकान्नोत्पत्तिः, किन्तु वसुधातलादुत्पत्तिरित्यर्थः । **न पुरस्कृतम्**=सम्मानित नहीं किया गया ।

१८१ **मिथ्योपघात**=अनुचित हानि ।

१८६ **अमित्रकर्शन**=शत्रुओं को क्षीण करने वाला, शत्रुविनाशक ।

१६८ **अनुध्यान**=निरन्तर चिन्तन करना । **वृत्तशौण्डीर**=व्यवहार के कारण विख्यात ।

२०० **बालिश**=अनभ्यस्त, मूर्ख ।

श्लोकसंख्या

२०१ **सत्यसंश्रय**=सत्य की शरण।

२०७ **विक्रान्त**=वीर।

२१८ **दैवतानि**=वंश के पूज्य देवता। **चैत्यानि**=नगर के बहु-संख्यक लोगों द्वारा पूजित देवता।

२१६ **वादित्र**=संगीत का यत्र।

२२१ **विष्टी:**=वेतनोपभोगी श्रमिक।

२२२ **श्रेणीमुख्या:**=शिल्पियों श्रौर व्यापारियों का संघ।

२३४ **महार्ह**=श्रति मूल्यवान्। **प्रतिकर्म**=सजावट।

२४७ **जुष्टम्**=तैयार या सजा हुश्रा।

२५१ **कुलधनम्**=लंका का राज्य। कतिपय समीक्षकों के श्रनुसार यह भाव यहाँ समीचीन नहीं है, क्योंकि राम ने विभीषण का राज्याभिषेक लंका में पहले ही कर दिया था। श्रत: यह संकेत निश्चय ही राम-वंश की सम्पत्ति की श्रोर है श्रौर सूर्य-वंशी राजा रङ्गनाथ देव की ही उपासना करते रहे हैं। इस देवता को राम ने विभीषण को समर्पित किया था। यह विश्वास किया जाता है कि बिभीषण ने इस देवता को मद्र राज्य में स्थित-**रुचिरापल्ली** के समीप कावेरी श्रौर **कोलरून** नदियों के मध्य एक द्वीप में स्थापित किया।

२५२ **गाम्**=वसुन्धरा। **धुरम्**=उत्तरदायित्व।

२५५-२५६ इन पंक्तियों से स्पष्ट होता है कि राम कितने कृपालु राजा थे। जैसा कि लोकोक्ति प्रसिद्ध है—यथा राजा तथा प्रजा:, सकुशल राज्य का सम्पूर्ण उत्तरदायित्व शासनाधिकारियों के व्यवहार पर निर्भर है। निस्सन्देह समाज में लोग दोषों के लिए श्रकेले ही कलंकित न किये जायेंगे।

श्लोकसंख्या

## उत्तरकाण्ड

१ **प्रतिनन्दितुम्**=स्वागत करने के लिये।
३ **आनर्च**=अर्चना की। **गाम्**=गाय।
११ **प्रवण:**=झुका हुआ, विनीत।
१२ **नियता**=निश्चल।
२० **कुत्सिते**=अपनी ही निन्दा करता है।
२५ **शक्रतेजस:**=शुक्र की कान्ति वाला।
२८ **विध्वंसित**=विनष्ट।
२९ **हव्यवाहन**=अग्नि।
३१ **विषयान्त**=देश की सीमा।
३४ **प्रविवेश**=स्ववेश्म इत्यर्थः।
३५ **परिशुष्यता**=सूखा हुआ, मुर्झाया हुआ।
३७ **सुरुचिर**=अति सुन्दर।
४३ **नैषादी**=निषादों से सम्बन्धित।
४४ **समायुक्ता**=समुद्यत।
४५ **नाविक**=मल्लाह।
४८ **निर्दोषा मम संनिधौ**=जो लंका में मेरी उपस्थिति में निष्कलङ्क घोषित की गई थी।
५१ **राजवंश: परिहास्यते**=राजसंततिः विच्छिद्यत इत्यर्थः।
५२ **प्राञ्जलिप्रग्रहेण**=अञ्जलि बाँधकर।
५९ **रुदन्तीम्**='रुदतीम्' का पुराना रूप।
६० **अग्रधी:**=प्रतिभाशाली, तीव्र बुद्धि वाला।
६३ **ह्लादयन्**=आह्लादित करते हुए।
७१ **कृतपौर्वाह्लिकक्रिय:**=पूर्वाह्ण की क्रियाओं को सम्पन्न करके।
७२ **दर्शनम्**=वह स्थान जहाँ वह लोगों से मिल सकता है।

श्लोकसंख्या

७५ **लोलपुत्रः**=लोलायाः पुत्रः ।

८३ **प्रेष्य**=सेवक ।

९० **रक्षा**=बचाव । **भूतविनाशिनी**=भूतों का विनाश करने वाली ।

९१ दर्भ घास का कटा हुआ पूर्व (ऊपरी) भाग कुश और नीचे का भाग अर्थात् डंठल कहा जाता है । बच्चों की शारीरिक आर्द्रता दूर करने के लिये क्रमानुसार इनका प्रयोग किया जाता था, अतः बच्चों का नाम रक्खा गया था—कुश और लव । **निर्मार्जनीयः**=स्वच्छ करने योग्य ।

९४ **अतिष्ठत**='अतिष्ठत्' का पुराना रूप ।

९६ **विनिष्पिष्य**=भली प्रकार पीस कर । **कटकटाय्य**=कर्कश ध्वनि उत्पन्न करके ।

९७ **आह्वयामास**=ललकारा ।

१०० **पण्य**=द्रव्य । **तां पुरीम्**=उस मधुरा नगरी की ओर संकेत है जो आधुनिक मथुरा है और जहाँ दैत्य रावण राज्य करता था ।

१०४ **परिदेवनम्**=विलाप ।

१०६ **उपरोधते**=कष्ट देता है, 'उपरुणद्धि' का पुराना रूप ।

१०७ **मार्गस्व**=खोज करो, 'मार्ग' का पुराना रूप ।

१०८ **पश्येयाः**='पश्येः' का पुराना रूप ।

१०९ **दध्यौ**=सोचा ।

१११ **अध्यरोहत**='अध्यरोहत्' का पुराना रूप । **आक्रामत्**='आक्रमत' का पुराना रूप ।

११२ **शैवल**=विन्ध्यश्रेणियों के दक्षिण स्थित एक पर्वत का नाम ।

११६ **भाषतः**='भाषमाणस्य' का पुराना रूप ।

श्लोकसंख्या

११७ कोश=खोली ।

११९ कक्ष्या=घर के बाहर की सहन ।

१२१ शब्दापयत=बोलना । मा चिरम्=विलम्ब न हो ।

१२४ कांचनी=सुनहली । ज्ञान=विद्वान् ।

१२५ प्रवर्तत='प्रावर्तत' का पुराना रूप ।

१२७ गायेथाम्='गायेतम्' का पुराना रूप ।

१३० आगम=प्राप्ति ।

१३२ यज्ञसंविधम्='यज्ञसविध' का पुराना रूप, यज्ञस्थल के समीप ।

१३३ कर्मान्तरे=यज्ञावकाश के मध्य । क्षणीभूतः=सुखपूर्वक, प्रसन्न । शृण्णुव='शृणु' का पुराना रूप ।

१३६ गच्छध्वम्='गच्छत' का पुराना रूप । शुद्धसमाचार=सद्व्यवहारशील ।

१३७ अनुमान्य महामुनिम्=महामुनि का आदेश पाकर ।

१३८ लघु=शीघ्रता से ।

१४३ व्युष्टायाम्=ऊषा होने पर ।

१४४ शपथ=शपथ ग्रहण करना । अश्मभूतमिवाचलम्=पाषाण या पर्वत के समान स्थिर ।

१४७ यमजातकौ=जुड़वा के रूप में उत्पन्न ।

१५२ माधवी भूदेवी=विष्णुपत्नी । विवरम्=छिद्र ।

१५७ अवाकिरत्=उँडेल दिया ।

१५८ संमोहितम्=मूर्च्छित या जड़ीभूत ।

१६४ श्वोभूते=काल होने पर ।

१६८ कांचनी भवत्='काञ्चन्यभवत्' का पुराना रूप ।

१६९ कालधर्म=मृत्यु ।

श्लोकसंख्या

१८१ **निवेश्य**=निर्माण करके । **संनिवेश्य**=उन्हें रखकर ।

१८२ **शक्रयुक्तेव**=मानों इन्द्र द्वारा व्यवस्थित ।

१८५ **व्यनदन्**=चिल्लाने लगे ।

१९ **पार्ष्णिग्राहो**=सेना के समीपस्थ नायक या अध्यक्ष ।

२०० **निरीक्षेत्**='निरीक्षेत' का पुराना रूप ।

२०१ **द्वन्द्वम्**=रहस्य ।

२०७ **अतिवर्तते**=व्यतीत करता है, विलम्ब करता है ।

२१६ **उपस्पृश्य**=जल का आचमन करके ।

२१७ **सर्वस्रोतांसि**—समस्त ज्ञानेन्द्रियों के छिद्र या द्वार ।

२१९ **नैगमान्**=व्यापारी ।

२२१ विगर्हयामास=तिरस्कार किया ।

२२४ पौराणां दृढभक्तिम् अवेक्ष्येत्यर्थः ।

२३४ **माहाप्रास्थानिकम्**=जीवनवियोगविषयक ।

२३६ **व्यवसाय**=विनाशकारी शक्ति के रूप में एक देवताविशेष ।

२४१ **देवाभैः**—देवों की आकृति (या दीप्ति ) से युक्त ।

२४५ **गोप्रताम्**=सरयू का एक पवित्र स्थल ।

२४६ **अवगाह्य**=अवगाहन करके ।

२५० **सौभ्रातृकम्**=भ्रातृत्व को ऊपर उठाकर । **ओजस्कर**=बलकारी ।

---